तन्त्र्यते -धार्यते शरीरमनेनेति तन्त्रम् तस्य गुणास्तन्त्रगुणाः यैस्तन्त्रमलंक्रियते तन्त्रयुक्त्यादयः तैरेवं प्रकारैर्युक्तम्। तथा चोक्तं सङ्ग्रहे उ अ ५०- अलङ्कृतं युक्तिपदैः सद्रत्नैरिव काञ्चनम्।षट्त्रिंशताऽर्थदुर्गेषु भिषजां सङ्क्रमैरिव।
तत्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च।
प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम्॥
उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः।
प्रङ्गैकान्तनैकान्ताः सापवर्गो विपर्ययः॥
पूर्वपक्षविधानानुमतव्याख्यानसंशयाः।
अतीतानागतापेक्षास्वसंज्ञोह्यसमुच्चयाः॥
निदर्शनं निर्वचनं नियोगोऽथ विकल्पनम्।
प्रत्युत्सारस्तथोद्धारः सम्भवस्तन्त्रयुक्तयः॥ इति ।

1)तत्र अधिकरणं नाम- यदधिकृक्त्य प्रवर्तते शास्त्रं स्थानमध्यायः प्रकरणं वाक्यं वा। तत्र शास्त्राधिकरणं - यदधिकृत्य शास्त्रं प्रवर्तते । यथा- अष्टावङ्गान्यधिकृत्य हृदयाख्यं सर्वं शास्त्रं प्रवृत्तं। यथोक्तं कायबाल १ ५ इत्यादि। स्थानाधिकरणं यथा- अत्रार्थाः सूत्रिताः सूक्ष्माः प्रतन्यन्ते हि सर्वतः।उ० ५३ इति । अध्यायोऽपि यदधिकृत्य प्रवर्तते तत् प्रकरणाधिकरणम्। यथा- अथातो दिनचर्याध्यायं व्याख्यास्यामः। इति प्रकरणं यदधिकृत्य प्रवर्तते तत् प्रकरणाधिकरणम्। यथा- दशमूलसिरा हृत्स्थास्ताः सर्वं सर्वतो वपुः। इत्यादि यावत् इत्यवेध्यविभागार्थं प्रत्यङ्गं वर्णिताः सिराः। इत्यादि। एवं वाक्यमपि यदधिकृत्य प्रवर्तते तद्वाक्याधिकरणं वेद्यम् ॥

2)योगो नाम योजना उद्देशनिर्देशयोः सूत्रभाष्ययोर्वा। यथा - अथतोऽङ्गविभागं शारीरं व्याख्यास्यामः । हृ शा ३ इत्युद्दिश्याङ्गानि विभजते- शिरोऽन्तराधिर्द्वौ बाहू सक्थिनी च समासतः। षडङ्गम् इत्यादि । युक्तिर्वा योगः प्रतिज्ञाहेतुर्दृष्टान्त उपनयो निगमनमिति पञ्चविधः। यथा- अग्निः शरीरस्थितेर्मूलमिति प्रतिज्ञा । अग्निपक्वाहारे सति तत्स्थितेरिति हेतुः । तत्राग्निर्हेतुराहारान्नह्यपक्वाद्रसादयः। हृ शा ३ ५५ इति वचनात्। यथा शाल्यङ्कुरस्य बीजमिति दृष्टान्तः। उपनयो यथा- चिकित्साशास्त्रस्य प्रयोजनत्वसाधनाय बहुधा दृष्टान्तोपनयं कृतवांस्तन्त्रकृत् कस्यासिद्धोऽग्नितोयादिः उ ४० ६८ इत्यादयः। तस्मात् सप्रयोगनमेव चिकित्साशास्त्रं प्रत्यक्षफलत्वादित्युपनयः। तस्मादारम्भणीयमिति प्रमाणपदोपदर्शनमुखेन निगमनम् । यथोक्तं चतुष्पाद् दगुणसम्पन्ने सम्यगालोच्य योजिते । मा कृथा व्याधिनिर्घातं विचिकित्सां चिकित्सिते ॥ साध्यव्याधिचिकित्सायां संशयानुपपत्त्या प्रतिपादितया प्रमाणफलोपसंहरकरणम् ।

३-हेत्वर्थो नाम - यदन्यप्रस्तावोक्तमन्यत्रापि तथैवोपपद्यते । यथा- ततेकैकं च शाखायां शतं तस्मिन्न वेधयेत्। सिरां जालन्धरां नाम तिस्रश्चाभ्यन्तराश्रिताः ॥ इत्यादि हृ शा ३ २०। तथा - अवेध्याः सङ्कीर्णा ग्रथिता क्षुद्राः इत्यादि । तददेतेभ्यो विशेषवचनेभ्योऽनुमीयते शेषा वेध्या इति । अन्यथैतानि वचांसि निरर्थकानि स्युरिति ।

४-पदार्थो नाम - पदेनर्थो गम्यते। यथा द्रव्यमिति पदं तस्यार्थो भूजलादिः। गुण इति पदं तस्यार्थो गुर्वादिः।

५) प्रदेशो नाम - येषामर्थानामतिबहुत्वात् साकल्येनाभिधानस्याशक्यत्वात् स्तोकमुच्यते। यथोक्तं - इति द्रवैकदेशोऽयं यथास्थूलमुदाहृतः।हृ सू ५ ८४ इति ।

६) उद्देशो नाम - संङ्क्षेपाभिधानम्। यथा - वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः। इत्यादि ।

७) निर्देशो नाम - तस्यैव विस्तारोक्तिः। यथोक्तं - तत्र रूक्षो लघु शीतः खरः सूक्ष्मश्चलोऽनिलः। इति

८) वाक्यशेषो नाम- यस्मिन् सूत्रे लाघविकेनार्थाद्गम्यमानमनुक्तपूरणार्थमध्याह्रियते। यथा- तत्र खात् खानि देहेऽस्मिन् भवन्ति इति वाक्यशेषः। आप्या जिह्वारसक्लेदाः शा ३ ४ इत्युत्तरत्र भावार्थो तद्धितश्रवणात्।

९) प्रयोजनं नाम- यदर्थं शास्त्रादि प्रवर्तते। यथा - आतङ्कपङ्कमग्नानां हस्तालम्बो भिषग्जितम् । उ ४० ६४ । अनेन प्रयोजनेन चिकित्साशास्त्रमध्येयमित्यादि ।

१०) उपदेशो नाम - आप्तवचनम्। यथा - स्नेहक्लिन्नाः कोष्ठगा धातुगा वा स्त्रोतोलीना ये च शाखास्थिसंस्थाः। दोषाः स्वेदैस्ते द्रवीकृत्य कोष्ठं नीताः सम्यक्शुद्धिर्निर्ह्रियन्ते। इतादि।

११) अपदेशो नाम -यदाचार्यः किञ्चिदर्थं प्रतिज्ञाय हेतुमुपदिशति। यथा- जीवितं म्रियमाणानां सर्वेषामेवनौधात् । इति प्रतिज्ञाय हेतुमाह उ ४० ६५ - न ह्युपायमपेक्षन्ते सर्वे रोगाः सर्वरोगाणामुपायापेक्षाभावात् ।

१२) अतिदेशो नाम - यत् किञ्चिदेवार्थजातमुक्तार्थ साधनाय एवमन्यदपि प्रत्येतव्यमिति परिभाषायां स्थापयति । यथोक्तं कर्णरोगप्रतिषेधे उ १८ ४- महतः पञ्चमूलस्य काष्ठात् क्षौमेण वेष्टितात् । तैलसिक्तात्प्रदीप्ताग्रात् स्नेहः सद्यो रुजापहः॥ योज्यश्चैवं भद्रकाष्ठात्कुष्ठात् काष्ठाच्च सारलात् । इत्यादि ।

१३) अर्थापत्तिर्नाम- योऽन्येनार्थेनोक्तेन ततोऽपरोऽप्यर्थो गदित इव ज्ञायते । यथा- नैवाद्यान्निशि नैवोष्णम् । इत्युक्तं न तूक्तं दिवा भुञ्जीतेति । एतच्चार्थापत्त्या गम्यते। ननु कः पुनरर्थः का चास्यापत्तिः ब्रूमः। दध्यभ्यवहारोऽर्थस्तत्र तन्त्रकृता नैवाद्यान्निशि इति कालो निषिद्धो न तु दधिभक्षणम्। ततो योऽयमप्रतिषिद्धोऽर्थः स आपद्यते दिवा दधिभोजनार्थः रात्रिप्रतिषेधे दिनव्यतिरेकेण कालान्तराभावात्। सर्वथा

अनभ्यवहरणीयस्याहारप्रस्तावे प्रतिषेधानुपपत्तेः। एवमन्यात्रापि व्याख्येयम्।

१४) निर्णयो नाम - यन्निवारितस्यार्थस्य प्रतिष्ठापनम्। यथा - दृश्यन्ते भगवन् केचिदात्मवन्तोऽपि रोगिणः। इत्यादिना चिकित्साशास्त्रफलं प्रति संशयकरणे पश्चान्निर्णयार्थमुक्तम्। यथा- न चिकित्सा च तुल्या भवितुमर्हति। इत्यादि

१५) प्रसङ्गो नाम - पूर्वाभिहितस्यार्थस्य केनचित् सम्बन्धान्तरेण पुनरभिधानम् । यथोक्तं सिराव्यधविधौ २७ २ लोहितं प्रवदेच्छुद्धतनोस्तेनैव च स्थितिः । इत्युक्त्वा पुनः शरीरे शुद्धार्तवप्रसङ्गेनोक्तं- शुद्धे शुक्रार्तवे सत्वः स्वकर्मक्लेशचोदितः । गर्भः सम्पद्यते युक्तिवशादग्निरिवारणौ ॥ इति । न च पुनरुक्तता तस्य। यस्मात् सिराव्यधे शरीरप्रभवत्वमेव रक्तस्योक्तं न तु क्रमो वर्णितः। शारीरे तु ययाऽऽनुपूर्व्या शरीरहेतुः स्यात् तद्विस्तरेणोक्तम् । यथा- बीजात्मकैर्महाभूतैः सूक्ष्मैः सत्वानुगैश्च सः। मातुश्चाहाररसजैः क्रमात् कुक्षौ विवर्धते ॥ इति।

१६)एकान्तो नाम - य एकमेव पक्षमव्यभिचारेण श्रयति नान्यम् । तद्यथा - ये भूतविषवाय्वग्निक्षत भङ्गादिसम्भवाः रागद्वेषभयाद्याश्च ते स्युरागन्तवो गदाः ॥ इति।

१७) नैकान्तो नाम – अन्यतरपक्षानवधारणात् । यथा- जीवितं म्रियमाणानां सर्वेषामेव नौषधात् । एकान्तेन - न ह्युपायमपेक्षन्ते सर्वे रोगाः इत्यादि ।।

१८)अपवर्गो नाम - साकल्येनोत्सृष्टस्य यत्पुनस्तदेकदेशापकर्षणम्। यथा- शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च ये गदाः। सम्यक् साध्या न् सिद्ध्यन्ति ते च रक्तप्रकोपजाः। तेषु स्रावयितुं रक्तमुद्रिक्तं व्यधयेत्सिराम् । इत्युत्सर्गमभिधाय एकदेशेऽपवादं वक्ति - न तूनषोडशातीतसप्तत्यब्दस्रुतासृजाम् । इत्यादि।

१९) विपर्ययो नाम- यथोपदिष्टविपर्ययेण लक्षणादिकरणम् । यथोक्तं- वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम् । स्नेहोद्वेगः क्लमः सम्यक् स्निग्धे रूक्षे विपर्ययः॥ इति।

२०) पूर्वपक्षो नाम- प्रतिज्ञातार्थस्यसंदूषणं वाक्यम्। यथा हिताहितविभागं प्रत्याचिख्यासन्नाह । यथा - दृश्यन्ते भगवान् केचित् इत्यारभ्य यावात् हिताहितविभागस्य फलं तस्मादनिश्चितम् । इत्यादि ।

२१) विधानं नाम- यत्प्रकरणानुपूर्वं विधानमावेक्ष्यते ।

२२) अनुमतं नाम- उष्णं शीतं द्विधैवान्ये वीर्यमाचक्षतेऽपि च । नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ ॥ इत्यादिना ह्यनुमतं न विघातः कृतः।

२३) व्याख्यानं नाम - यन्मादृशेभ्यो विशिष्टतरबुद्धिगम्यम्।यथा- सप्ताहात् कललीभवेत् । द्वितीये मासि कललात् घनः पेश्यथवार्बुदम् । पुंस्त्रीक्लीबाः क्रमात् इति । न ह्यत्र गर्भस्यावर्तमाना भावाः शक्या विज्ञातुं योगिदृष्टिं मुक्त्वा ।

२४) संशयो नाम - साकाङ्क्षत्वमनिश्चितवस्तु विज्ञानम्।यथा - संशयं प्राप्तमात्रेयो जीवितं तस्य मन्यते। इत्यादि ।

२५) अतीतापेक्षणं नाम- यदतिक्रान्तमपेक्ष्य प्रस्तुतस्य साधनमुच्यते । यथोक्तं हृद्रोगचिकित्सिते - रास्नाजीवक इत्यादि यावत् महास्नेहं विपाचयेत् ॥ इति। अत्र च न जायते कतमो महास्नेह इति । तदेतदतिक्रान्तमपेक्ष्य प्रसाध्यते स्नेहविध्युक्तम् । यथा - द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् । इत्यापेक्ष्य व्याख्यायते ।

२६) अनागतापेक्षा नाम--

२७) स्वसंज्ञा नाम -या तन्त्रकारैः स्वतन्त्रसंव्यावाहारार्थं प्रणीता सती परतन्त्रेषु न व्यवहरति । यथा शाखा रक्तादयस्त्वक् च इति ।

२८) ऊह्यं नाम -यदप्रतिबद्धं ग्रन्थे स्वयं प्रज्ञया तर्कयित्वा योज्यम्। यथोक्तं -त्रयस्त्रिंशदिति प्रोक्ता वर्गास्तेषु त्वलाभतः। युञ्ज्यात् तद्विधमन्यच्च द्रव्यं जह्यादयौगिकम् ॥ इति

२९) समुच्चयो नाम यथा पेयां विलेपीमकृतं कृतं च यूषं रसं च समुच्चिनोति तथा - त्रीनुभय तथैकम् । क्रमेण सेवेत नरोऽन्नकालान् प्रधानमध्यावरशुद्धिशुद्धः॥ इति।

३०) निदर्शनं नाम- यन्निदर्शयितव्यं सूक्ष्ममप्यर्थं स्वधर्मसादृशयात् । स्पष्टीकरोत्यादर्श इव मुखविधुम् । यथोक्तं- यथा कुसुम्भादियुतात्तोयाद्रागं हरेत्पटः। तथा द्रवीकृतात् देहाद् बस्तिर्निर्हरते मलान् ॥ इत्यादि ।

३१) निर्वचनं नाम - निर्णयार्थं वचनं निरुक्तम्। यथोक्तं विषविधाने मथ्यमाने जलनिधावमृतार्थं सुरासुरैः॥ इति । यावत् विषस्य निर्वचनं जगद्विषमिति ।

३२) नियोगो नाम- यो यस्यानुष्ठेयः। यथा - उष्णोदकोपचारी स्यात् इत्यादि ।

३३) विकल्पो नाम - विविधं कल्पनम् इदं कार्यमिदं वा कार्यम्। यथोक्तं पूर्वरूपदर्शने ज्वरादौ वा हितं लघ्वशनमपतर्पणम् वा ।

३४) प्रत्युत्सारो नाम - यत्रोपपत्तिं दर्शयन्तः परस्परमतानि निवारयन्ति । तद्यथा - अस्थ्नां शतानि षष्ठिश्च त्रीणि दन्तनखैः सह। धन्वन्तरिस्तु त्रीण्याह सन्धीनां च शतद्वयम्॥दशोत्तरं सहस्रे द्वे निजगादात्रिनन्दनः। इति पूर्वमतात् षष्ठिं प्रत्युत्सारयति। धन्वन्तरेरपि मतं दशोत्तरं सन्धिशतद्वयमिति पुनर्वसुः प्रत्युत्सारयति ऋ चोद्यस्य समाधनम्। तद्यथा- दृश्यन्ते भगवान् केचिदात्मवन्तोऽपि रोगिणः। यावत् हिताहिताविभागस्य फलं तस्मादनिश्चितम्। इति कृते चोद्ये- न चिकित्साऽचिकित्सा च तुल्या भवितुर्महति इति परिहरः॥

३५) उद्वारो नाम शास्त्रारम्भप्रत्याख्यानादि चोद्यस्य समाधानम्। तद्यथा -दृश्यन्ते भगवन् केचिदात्मवन्तोऽपि रोगिणः। यावत् हिताहितविभागस्य फलं तस्मादनिश्चितम् । इति कृते चोद्ये- न चिकित्साऽचिकित्सा च तुल्या भवितुमर्हति इति परिहारः ।

३६- सम्भवो नाम- उपपत्तिर्यस्मिन्नुपपद्यते अनुपदिष्टे। यथा - दुष्टरक्तापगमनात् सद्यो रागरुजां शमः।इत्युक्तम्।
प्रच्छानालबुजलौकाशृङ्गसिराव्यधैर्यथसम्भवं रक्तमपनीयते। यथोक्तं- प्रच्छानेनैकदेशस्थं ग्रथितं जलजन्मभिः। हरेच्छृङ्गादिभिः सुप्तमसृग्व्यापि सिराव्यधैः। इति एवमन्यत्रापि सम्भवार्थो योज्यः।
व्याख्या अपि तन्त्रस्य गुणः। ताभिरपि तन्त्रमलङ्क्रियते। ताश्च पन्चदश प्रकाराः। तद्यथा-
पिण्डपदपदार्थाधिकरणप्रकरणार्थकृच्छ्रफलोच्चितकन्यासप्रयोजनानुलोमप्रतिलोमातिसूत्रसमस्तव्याख्याः।

तत्र पिण्डव्याख्या नाम - सङ्क्षेपतया सूत्ररूपेणाध्यायादीनां व्याख्या। यथा- रूपेन्द्रियस्वरच्छायाप्रतिच्छायाक्रियादिषु। अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्ततः॥ विकृतिर्या समासेन रिष्टं तदिति लक्षयेत्। इत्यनेन सकरिष्टाध्याय समास उक्तः।
२ पदव्याख्या नाम - यत्पदानां छेदं कृत्वोच्चारणम्। यथा - अथ अतः आयुष्कामीयं अध्ययं वि आख्यास्यामः। इति सप्तपदं सूत्रं पूर्वं व्याख्यातम्।
३ पदार्थव्याख्या नाम तेषामेव पदानां विवरणम्। यथा अथ शब्दं आनन्तर्ये अधिकारे वा अतः शब्दो हेतावित्यादि।
४ अधिकरणव्याख्या नाम यद्वस्तुकृतमारभ्य तदनुषङ्गेण व्याख्यानमारभ्यते। यथा- अथातो दिनचर्याध्यायं व्याख्यास्यामः। इति प्रत्युत्य ब्राह्मे मुहूर्त उत्तिष्ठेत्स्वस्थो रक्षार्थमायुषः। इत्यादिना सैव दिनचर्या विवृत्य व्याख्यायते सविस्तरा।
५ प्रकरणव्याख्या नाम यस्मिन्नर्थे सूत्रे वा प्रकृतेनाप्रकृतं साध्यते यथा - त्रिलवणाद्ये चूर्णे गुणानुक्त्वाऽभयाख्ये एवमाह समानं पूर्वेण इति। तत्र समानगुणता व्याख्याता।
६ अर्थव्याख्यान नाम यत्र प्रकरणे सूत्रे वा स्वभावस्योपवर्णनं क्रियते। तद्यथा - प्रकृतिरुच्यते स्वभावः। स पुनराहारौषधद्रव्याणां स्वभाविको गुर्वादिगुणयोगः। तद्यथा- माषमुद्गयोः सूकरैणयोश्च।
७ कृच्छ्रव्याख्या नाम - यत्र लेशत उक्तानामविस्पष्टानां प्रकरणे सूत्रे वा अर्थानां यत्नत उद्भावनं क्रियते। तद्यथा- अनुयायात्प्रतिपदं सर्वधर्मेषु मध्यमाम्। इति लेशतो ब्रुवाणः शास्त्रकारः सर्वेषु हेतुलिङ्गौषधादिषु मध्यमा प्रतिपदाश्रयणीयेति सूचयति।
८ फलव्याख्य नाम - यत्र वस्तुनि बहुष्वनिश्चितार्थेष्वेकीयमतेषु प्रस्तुतेषु वस्तुसारभूतं स्वमतं स्वमर्थमुपनिक्षिप्यैकीयमतानि तस्मिन्नेव स्वमतेऽन्तर्भावं नयति। यथा द्वादश प्रसृतो निरूहः कार्यः इत्येके। मात्रां त्रिपलिकां कुर्यात् स्नेहमाक्षिकयोः पृथक्। इत्याद्यन्ये। तदेतानि मतानि दोषौषधबलापेक्षया स्वमतान्तर्भावितानि प्रमाणानि च। यथोक्तं- दोषौषधादिबलतः सर्वमेतत्प्रमाणयेत्। अन्योन्यविरुद्धमपि सम्यङ्निरूढलिङ्गं तु नासम्भाव्य निवर्तयेत्॥ इति।
९ उच्चितकव्याख्या नाम- यस्मिन् सूत्रे निदर्शनभूतान्युदाहरणानि तन्त्रान्तः समाकृष्यार्थः शस्यते। यथा- पृथिव्यादिषु च महाभूतसंज्ञा स्थापिता रसादिषु च धातुसंज्ञा निवेशिता। रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः। इति। पुनरुच्यते-
परस्परोपसंस्तम्भाद्धातुस्नेहपरम्परा। इति। अत्र किं धातोर्ग्रहणेन भूतान्यपि धातुशब्दवाच्यानि भवन्ति इति।
१० न्यासव्याख्या नाम - यस्मिन्नधिकारे वर्तमाने तेनाधिकरणार्थेन सहितं सम्बन्धमभिवीक्ष्यान्यस्यार्थो विनिक्षिप्यते। यथा -दृश्यन्ते भगवन् केचिदात्मवन्तोऽपि रोगिणः। इति हिताहितविभागस्य फलं प्रति संशयमभिविक्ष्य न चिकित्साऽचिकित्सा च तुल्या भवितुर्महति। इत्यादिना उत्तरं दत्वा तेनैव प्रसङ्गेनान्योऽर्थो निक्षिप्यते। यथा - एतत्तदमृतं साक्षाज्जगदायासवर्जितम्। याति हलाहलत्वं तु सद्यो दुर्भाजनस्थितम्॥ इति। एवमन्येषामप्यर्थानां सम्बन्धमवधार्य व्याख्याऽर्थार्हा कल्पनीया।
११ प्रयोजनव्याख्या नाम- यत्सूत्रमभिधीयमानं स्वार्थस्य निष्पत्तौ निमित्तभावमुपैति। यथा - उक्तोऽङ्गविभागेऽनेकधा सिराविस्तरः। न च तेन सिराविस्तरणोक्तेन किञ्चिदिहोपकारो दृश्यते। यदि प्रकरणावसरे प्रयोजनमिदं ब्रूयात् इत्यवेध्यविभागार्थं प्रत्यङ्गं वर्णिताः सिराः। एतदर्थं सिरावरणं प्रवृत्तम्।
१२ अनुलोम्यं नाम

तत्र १-२ प्रधानकल्पना द्विविधा- प्रधानस्य कल्पना प्रधानेन वा कल्पना प्रधानकल्पना। प्रधानस्य कल्पना यथा- सर्पिः स्नेहनं क्षीरं जीवनं मधु सन्धानकृत् इत्यत्र मध्ये प्रकृष्टगुणत्वात् सर्पिः क्षीरे स्नेहजीवने कल्प्येते न तु तैलयोगादिष्वपि स्नेहजीवनत्वं नास्तीति। माक्षिकं च सन्धाने प्रधानत्वात् सन्धानकृदित्युक्तं न तु सिक्थकमधुयष्टिकादिष्वपि सन्धानकृत्वं नास्तीति। प्रधानेन तु कल्पना यथा-
क्षीरदधितक्रमस्तुनवनीतक्षीरघृतपुराणघृतकिलाटपीयूषकूचीकामोरणादिवर्गः सर्वः क्षीरवर्ग इत्युक्तः क्षीरप्राधान्यात्। प्रधानेन कल्पनाव्यपदेश इत्येकोऽर्थः।
३ गुणकल्पना नाम - येन धर्मेणोपेतोऽर्थः प्रयुज्यमानः समर्थो भवति तेन धर्मेण युक्तस्य तस्यासावगुणोऽपि गुर्वादिष्वपाठाद् गुण इति कल्प्यते। यथोक्तं- भिषक् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम्। चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्गुणम्॥ इत्यादि। दक्षत्वादिचतुर्गुणनिर्देशः सर्वथा प्रशंसागुण इति गम्यते।
४ लेशकल्पना नाम - अनुपदिष्टस्य विधेः कण्ठपाठेन यत्किञ्चित्सूत्रावयवान्तरमाश्रित्यार्थः कल्प्यते। यथा- नात्र शास्त्रे कालमृत्योरकालमृत्योर्वा किञ्चिल्लक्षणं प्रणीतम्। तत्तु लेशतोऽनुमीयते। कथमिति यदा हि कालनियतमायुः क्षयं प्राप्तं भवति तदा

रिष्टमुत्पद्यते न विषमपरिहारेण म्रियमाणे नरे। उक्तं हि- भिषग्भेषजपानान्नगुरुमित्रदिद्विषश्च ये। वशगाः सर्व एवैते विज्ञेयाः समवर्तिनः। इति। अत्र विकृतिविज्ञानीये गुरुमित्रद्विषश्चेति च शब्दोऽस्माच्छलोकात् पूर्वकाणि यानि चोत्तराणि तानि सर्वाण्येव समुच्चिनोति। समवर्ती हि कालो मृत्युरिष्टः इतरत्वसमर्ती। अत एव चाचष्टे तन्त्रान्तरे- कालमृत्योरेव रिष्टानि नाकालमृत्योः। इति स्वाभिप्रायप्रकाशनार्थं तन्त्रकारः शकटोदाहरणं दत्तवान्। यथा- सम एव वाह्यमानः स्वप्रमाणक्षये भङ्गपूर्वरूपाण्याप्नोति। तथा नियतायुषः स्वप्रमाणक्षये रिष्टसम्भवः। यथा च - स एवातिभारक्रान्तत्वाद्विषमपथाश्रितत्वादकालेऽपि क्षयमाप्नोति। तथा अनियतायुषो रिष्टोत्पत्तिमन्तरेण मृत्युः। यदि पुनरनियतायुषोऽपि रिष्टोत्पत्तिपूर्वं मरणं कल्प्येत तदा वार्षिके षाण्मासिके वाऽरिष्टे समुत्पन्ने शुभहेतुयोगान्न मृत्युः स्यात्। अनियतायुषो हि सम्यगुपचाराज्जीवितानुवृत्तिः। विषमहेत्वपरिहारान्मृत्युः। अत एवानियतायुषमधिकृत्य रसायनान्युपदिष्टानि। तद्योगादयं बहून्यपि वर्षाणि जीवेत्। नियतायुषस्तु कालमृत्युवर्षशतात् परेण जीवितं न निर्दिष्टम्। यथोक्तं शारीरे - मरणं प्राणिनां दृष्टमायुः पुण्योभयक्षयात्। तयोरप्यक्षयाद् दृष्टं विषमापरिहारिणाम्। इति। तस्मादविशेषोक्तावपि नियतायुष एवारिष्टोत्पत्तिपूर्वं मरणमिति निश्चितम्। तथा च ऋतुचर्याध्यायं व्याख्यास्यामः। इति प्रतिज्ञायां षड़ृतुविशेषे प्रतिपत्तिर्भवति। न तु ऋतुस्तु द्वादशनिशाः अस्य ऋतोरिति।

५ विद्याकल्पना नाम -यथा सर्वविद्यानुगतार्थनिर्देशे शास्त्रकारस्य सर्वविद्यास्थानानुप्रवेश इह शास्त्रे हित इति वचनद्विनाऽपीष्यते। तत्र आर्द्रसन्तानता त्यागः इत्यादिना वाक्येन बुद्धिवचनविषय अध्यात्मविद्यासङ्ग्रह इङ्ग्यते। अर्चयेद्देवगोविप्र इत्यादिना धर्मशास्त्रोपदेशसङ्ग्रहः। तथा जगद्विषाण्णां तं दृष्ट्वा तेनासौ विषसंज्ञितः। इत्यादिना पदव्युत्पादनान्निरुक्तकरणाच्च शब्दविद्याया निरुक्तेश्चोपसङ्ग्रहः। साधकेऽहनि सूतिकां गृहं प्रवेशयेत्। तथा भरणीकृत्तिकाश्लेषापूर्वार्द्रापितृनैऋते। इति ज्योतिः शास्त्रोपरोधः। विचित्रभूषितशास्त्रस्योत्पेक्षणीयम्।

६ भक्ष्यकल्पना नाम - एतत्तदमृतं साक्षात् इत्यादि

७ आज्ञाकल्पना नाम - यस्यानुष्ठाने हेतुः सम्यगवन्तुं न शक्यः केवलमाप्तवचनं प्रमणीकृत्यानुष्ठीयते। यथा - न छिन्द्यात्तृणम् न भुवं लिखेत् इति। न ह्यत्र हेतुर्वक्तुं शक्यते एतदनुष्ठेयमिति।

इयं सप्तविधा कल्पना, विशत्यश्रया भवति।

यथा - १-आदिलोपः २- मध्यलोपः ३- अन्तलोपः ४-उभयपदलोपः ५-आदिमध्यान्तलोपः ६ - वर्णोपजननम् ७-ऋषिक्लिष्टम् ८- तन्त्रशीलम् ९- तन्त्रसंज्ञा १०- प्रकृतम् ११- समानतन्त्रप्रत्ययः १२ परतन्त्रप्रत्ययः १३हेतुहेतुकधर्मः १४ कार्यकारणधर्मः १५ आद्यन्तविपर्ययः १६ शब्दान्तरम् १७ प्रत्ययः १८ उपनयः १९ सम्भवः २० विभवः इति।

१ तत्र आदिलोपो नाम -यथा बृंहणः प्रीणनो वृष्यश्चक्षुष्यो व्रणहरा रसः। इत्यत्र मांसशब्दलोपेन। तथा च- धारणोदीरणनिशा इत्यादौ धारणं वेगधारणम् उदीरणं वेगोदीरणमिति।

२ मध्यलोपो नाम -यथा द्रवद्रव्यविज्ञानीयमध्यायं व्याख्यास्यामः। इत्यत्र द्रवद्रव्यस्वरूपविज्ञानीयो द्रवद्रव्यविज्ञानीय इत्युक्तः अनन्तरं अन्न स्वरूपविज्ञानीयः इत्यत्र स्वरूपशब्दश्रवणात्।

३ अन्तलोपो नाम - यथा - कफं पुनः गौर्यः स्निग्धाः शिराः शीताः वहन्ते इत्यत्रास्रशब्दस्य लोपो द्रष्टव्यः पूर्वत्रास्रशब्दस्य प्रकृतत्वात्। यथोक्तं- तत्र श्यावारुणाः सूक्ष्माः पूर्णरिक्ताः क्षणात् सिराः।प्रस्पन्दिन्यश्च वातास्रम् इति। एवमिहापि कफास्र वहन्त इत्यनुमेयम् तुल्यजातीयत्वात्।

४ उभयपदलोपो नाम - यथा- अदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत्। इति वचने मध्ये विदाहादम्लतां ततः॥ पित्तमामाशयात्कुर्याच्च्यवमानं च्युतं पुनः। अन्ते अग्निना शोषितं पक्वं पिडितं कटु मारुतम्॥ इति। आदिशब्दश्रवणात् मध्यान्तशब्दावत्र लुप्तनिर्दिष्टो द्रष्टव्यौ।

५ -आदिमध्यान्तलोपो नाम - यथा अन्नां कालेऽभ्यवृतं आदौ कोष्ठं प्राणानिलाहृतम्। मध्ये अन्ते च द्रव्यैः इत्यादि।

६ वर्णोपजननं नाम - यत्रानुक्तो ग्रन्थे वर्ण आचार्येण पश्चाद् व्याख्यानकाल उपजन्यार्थोऽभिधीयते। यथा -तत्र खात्खानि देहेऽस्मिन् श्रोत्रं शब्दो विविक्तता। तथा- वातात्स्पर्शत्वगुच्छवासा वह्नेर्दृग्रूपक्तयः। भवन्ति इति वर्णत्रयमुपजन्य व्याख्या करणीया। आप्या जिह्वारसक्लेदा घ्राणगन्धास्थि पार्थिवम्। इति द्वयोर्भूतयोर्भावार्थे तद्धितप्रत्ययश्रवणात्। वाक्यशेषोऽप्ययमेवं प्राय एव।

७ ऋषिक्लिष्टं नाम - यदृषी ऋषिपुत्रो वाऽसमाहितचित्ततयाऽशक्त्या वा किञ्चित्पदजातमजातंभ्रष्टमुच्चारितवान् तथैव तल्लोके प्रयुज्यते। यथा -रोम लोम इत्यादि।

८ तन्त्रशीलं नाम- या तन्त्रकारणं प्रकृतिः स्वभाव इत्यर्थः। यथा- किञ्चिच्छिष्यानुग्रहार्थं विस्तीर्णं सङ्क्षिपन्ति यथा -अस्थ्नां शतानि षष्टिश्च त्रीणि दन्तनखैः सह। इति न नान्यङ्गुलिहस्तपादमणिबन्धादि विभागेन विस्तारितानि। किञ्चिद्विस्तारयन्ति यथा - तत्रैवाङ्गविभागेन विस्तारिताः इत्यवेध्यविभागार्थं प्रत्यङ्गं वर्णिताः सिराः। इति वचनादिति।

९ तन्त्रसंज्ञा नाम - यत्किस्मिश्चिदर्थे मध्ये व्याख्यायमाने स्वतन्त्रसिद्धोदाहरणं तत्प्रमाणार्थमुच्यते। यथा- नवज्वरे कषाया अपक्वेषु दोषेषु वर्जनीया उक्ताः ततः पक्वेषु दोषेषु लङ्घनाद्यैः प्रशस्यते। कषायो दोषशेषस्य पाचनः शमनोऽथवा॥ इति विशेषवचनात्तत्र स्वरसादेः पञ्चविधस्य कषायस्य प्रतिषेधः प्रसक्तः। ततः स्वतंन्त्रसंज्ञया विशेषः प्रतिषिध्यते- तिक्तः पित्ते विशेषेण प्रयोज्यः कटुकः कफे। इत्यादि। तस्मात् स्वतन्त्रसंज्ञया तिक्तकटुकषायौ निषिद्धौ पञ्चविधया स्वरसादिकल्पनया।

१० प्रकृतं नाम - ऊषकस्तुत्थकं हिङ्गु कासीसद्वयसैन्धवम्। इत्यौषधाधिकारात् सैन्धवं लवणं नत्वश्वादिकम्।

११ समानतन्त्रप्रत्ययो नाम- यत्साध्यस्य कस्यचिदर्थस्य साधनायानुपलभ्यमाने स्वतन्त्राद् प्रत्यये समानेभ्यस्तन्त्रेभ्यः प्रत्ययः इति।

उदाहरणं यथा- नीचलोमनखश्मश्रुः इत्याचारेषूक्तम्। इयद्भिरियद्भिर्दिनैः केशनखश्मश्रूण्यवतार्य नीचलोमादिना भवितव्यमिति नोक्तम्। ततो व्याख्याकाराः क्षारपाणिप्रभृतयः प्रसिद्धा दशरात्रेण केशादीनां संग्रहमिति निश्चिन्वन्ति। मुनिस्त्वादीत्- त्रिभिः पक्षस्य केशश्मश्रुलोमनखान् संहारयेत्। इति।

१२ परतन्त्रप्रत्ययो नाम यस्यार्थस्य प्रसिद्धितो न स्वकीयमुदाहरणं शक्यमभिधातुं नाप्यन्येभ्यो भिषक्तन्त्रेभ्यः। ततस्तस्मिन् द्वये प्ररतन्त्रादुदाहरणं कलप्यते। यथा - कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः। सम्यग्गोगश्च विज्ञेयो रोगारोग्यैककारणम्॥ इत्युक्तम्। योगस्य च लक्षणं नोक्तं तन्त्रे अन्यत्र वा भिषक्तन्त्रे तत्र बौद्धतन्त्रप्रत्ययेन निश्चीयते- स्वहेतुभ्यः शीतोष्णादिलक्षणेन कालस्योत्पत्तिरेव योगः। इति।

१३ हेतुहेतुकधर्मो नाम - यो हेतुहेतुकेन धर्मो ज्ञायते। यथा- पित्तातिसारिणः पित्तलातिसेवनात् पित्तमुद्रिक्तं रक्तातिसाराय न चिरादस्य भविष्यतीत्यनुमीयते समर्थस्य हेतोः स्वकार्यस्याव्यभिचारात्।

१४ कार्यकारणधर्मो नाम - यत्र कार्यसंज्ञया कारणं निर्दिश्यते कारणसंज्ञया वा कार्यं तत्र कार्यसंज्ञया तावत्कारणं निर्दिश्यते। यथा दोषा अपि रोगशब्दं लभन्ते। तत्र दोषाः कारणं- सर्वेषामेव रोगाणां निदानं कुपिता मलाः। इति वचनात्। न चेदानीं दोषो रोग इति व्यपदिश्यमानः कारणे दोषे कार्यं रोग उपचरितो भवति। एवं कार्यकारणसंज्ञया निर्दिश्यते।

१५ आद्यन्तविपर्ययो नाम - यथा- अन्नस्वरूपविज्ञानं प्राप्तमुज्झित्वा पानमेव प्रथममुक्तं द्रवद्रव्यविज्ञानं कुवता तोयदीनां पञ्चानां वर्गाणामल्पवक्तव्यत्वत्। समुद्रोपमतया शास्त्रस्यानुपूर्वसुखावगाहनार्थं पूर्वं ह्यल्पं सुखेनावगाह्यते पश्चात्प्रभूतमिति न्यायात्।

१६ शब्दान्यत्वं नाम- यदर्थं पर्यायशब्दं वर्णयन्ति शास्त्रकृतः। यथा - रोगः पाप्मा ज्वरो व्याधिर्विकारो दुःखमामयः। यक्ष्मातङ्कगदाबाधाः शब्दाः पर्यायवाचिनः॥ इत्यादि।

१७ प्रत्ययधर्मो नाम- यो न च हेतुर्हेतुधर्मोपपत्तिमात्रेण च केनचिद्धेतुत्वेन व्यपदिश्यते। यथा- देवदानवगन्धर्वाद्युन्मादापस्मारादिविचित्रग्रहविकारा उक्ताः। यथोक्तं - फुल्लपद्मोपममुखं सौम्यदृष्टिमकोपनम्। यावत् अनिद्रमप्रघृष्यं च विद्यद्देववशीकृतम्। इत्यादि। न चैते परमार्थतो हेतवः किं तर्हि प्रज्ञापराधः। तथा चोक्तं - हेतुस्तदनुषक्तौ तु सद्यः पूर्वकृतोऽथवा। प्रज्ञापरधः सुतराम् इति।

१८ उपनयो नाम - सूत्रहेतुप्रस्तावेन यत्रान्यप्रकरणमुपनीयते। यथा मात्राशीतीये आहारमात्रालक्षणप्रस्तावे अतिमात्रभोजननिमित्ताया विसूचिकायाश्चिकित्सा उपनीता। मात्रायां हि विभज्यमानायामवश्यमूनातिमात्रेऽपि विभजनीये तदपेक्षया मात्रायाः सम्यक् प्रतिपादनसौकर्यात् तत्प्रस्तावेन च विसूचिकायाश्चिकित्सा।

१९ सम्भवो नाम - यत्सूत्रं प्रकरणं व विधीयमानर्थस्य व्यापकत्वात् सकलेन शास्त्रेण व्याख्यायते। यथा कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजरावृषान्। अष्टावङ्गानि तस्याहुश्चिकित्सा येषु संश्रीता। इति। एतान्याष्टावङ्गानि सकलेन शास्त्रेणोपदिश्यन्त इत्याचार्यः प्रतिजानीते।

२० भङ्ग्या विभवकल्पनायाश्चास्यायं विशेषः। अयं व्याख्याया विभवो भवति। स तु विनैव व्याख्यायाः पठ्यमान एवेति।

सप्तदश ताच्छिल्यादीनीत्युक्तम् । तद्यथा- १ ताच्छील्यम् २ अवयवः ३ विकारः ४ सामीप्यम् ५भूयस्त्वम् ६ प्रकारः ७ गुणिगुणविभवः ८ संसक्तता ९ तद्धर्मता १० स्थानम् ११ तादर्थ्य्यम् १२ साहचर्यम् १३ कर्म १४ गुणनिमित्तता १५ चेष्टानिमित्तता १६ मूलसंज्ञा १७ तात्स्थ्यम् इति।

१ ताच्छील्यम् ।

२ अवयवः ।

३ विकारः।

४ सामीप्यम् ।

५भूयस्त्वम् ।

६ प्रकारः ।

७ गुणिगुणविभवः ।

८ संसक्तता ।

९ तद्धर्मता।

१० स्थानम् ।

११ तादर्थ्य्यम् ।

१२ साहचर्यम् ।

१३ कर्म ।

१४ गुणनिमित्तता ।

१५ चेष्टानिमित्तता ।

१६ मूलसंज्ञा ।
१७ तात्स्थ्यम् ।

तत्र ताच्छील्यं नाम - यत्केनचिदेव धर्मसादृश्येन युक्तो भावस्ताच्छील्यमुच्यते। यथा-सर्वाङ्गसंश्रयस्तोदभेदस्फुरणभञ्जनम्। स्तम्भनाक्षेपणस्वापसन्ध्याकुञ्चनकम्पनम्॥ कुपितोऽनिलः करोति। इत्यन्ते न चाङ्गानि स्वपन्ति। किं तर्हि देवदत्तः स्वपिति। तद्धर्मसादृश्यादङ्गानि स्वापशब्देनोच्यन्ते। तद्यथा- पुरुषः सुप्तो न किञ्चिद्वेदयते। न चेतयते। तथाऽङ्गामपि यत्किञ्चिन्न वेदयते नखतोदादि। तत्सुप्तमिव सुप्तमित्युच्यते। इति

२ अवयवो नाम - यत्रैकदेशोदाहरणे क्रियमाणेऽनुक्तोऽन्योऽपि तज्जातीयकोऽर्थो लभ्यते। यथा- लङ्घनैः क्षपिते दोषे दीप्तेऽग्नौ लाघवे सति। स्वास्थ्यं क्षुत्तृड्रुचिः पक्तिर्बलमोजश्च जायते॥ इत्यनेनैकदेशोदाहरणेन लङ्घनेन दोषक्षपणेन लाघवे सति स्वास्थ्यादयोऽनुक्ता अपि लभ्यन्ते।

३ विकारो नाम - विपरीतक्रिया। यथा - विकारसंज्ञया प्रकृतिरपि लभ्यते। प्रकृतिसंज्ञया च विकारः। तत्र विकारसंज्ञया च प्रकृतिर्यथा -पुष्पे पत्रे फले नाले कन्दे च गुरुता क्रमात्। इति शाकमधिकृत्योक्तम्। अत्र प्रकृतिः पाठाशूकाषादीनां पत्रादीनि। तानि हि पाकेन विक्रियमाणानि चावस्थान्तरं प्रतिपद्यमानानि शाकसंज्ञां लभन्ते। तदयं शास्त्रकारस्तेषां विकारसंज्ञां यवादिमण्डलादिसंज्ञया यवादिकं चोक्तवान्।

४ सामीप्यं नाम

५ भूयस्त्वं नाम- यदेकस्मिन् वर्तमानमधिक्येन क्वचिल्लभ्यते। यथा तन्त्रे- अम्लो भक्तं रोचयति इत्युक्तं न च मधुरादिरपि रोचयतीति। कस्यचिच्चाम्लविद्वेषिणोऽम्लो रसो भक्तविद्वेषमेव कुर्यात्। तत्र भूयस्त्वमाश्रित्येदमुक्तम्- अम्लो रोचयति। कदाचिद् कस्यचिद्वा नासौ रोचयेन्न तावता तन्न रोचनम्।

६ प्रकारो नाम - यो यस्य समानधर्मा स तस्य प्रकारः। यथा- कण्ठमेरण्डनालेन स्पृशन् वमेत्। इत्युक्तम्। न च तत्प्रकाराणां सुवर्चलाशतपुष्पादिनालानां न ग्रहणम्।

७ गुणगुणिविभवो नाम - क्वचित् गुणीनि गुणशब्देनोक्तानि यस्मादाह- पार्थिवाः पार्थिवानेव इति। न हि पार्थिवा गुणाः सन्ति केचित् ये पठ्येरन्। गुणश्च गुणिवद्यथा- मेघास्मृतिबलोपेता बभूवुरमितायुषः। इति। अत्रायुगुणोपेतममितत्वात्। नायुषः परिमाणगुण आयुगुणेनैव शक्यः।

८ संसक्तता नाम - यदेकस्य बहुभिः सम्बन्धः। यथाविद्यमानेष्वपि तत्रान्येषु सम्बन्धेषु तस्यैव व्यपदेशः क्रियते। यथाविद्यमानेष्वपि तत्रान्येषु सम्बन्धेषु तस्यैव व्यपदेशः क्रियते। यथा - मधुरस्कन्धनिर्देशेन माक्षिकादयो गुणिताः कषायादिरसोपेता अपि मधुरप्रायत्वान् मधुरसंसक्ततया।

९ तद्धर्मता नाम- येन तथाभूतं सत्तद्धर्मतामासाद्य दर्शनात्तामेवाख्यां लभते। यथा- विवर्जयेद्भिषक्पाशान् पाशान् वैवस्वतानिव। इति। मारणधर्मो हि वैवस्वतपाशेन समानो दृष्ट इत्यतस्तेऽपि तथैवोक्ताः।

१० स्थानं नाम -यत्र स्थानिना स्थानं स्थानेन वा स्थानी व्यपदिश्यते। तत्र स्थानिना स्थानं यथा- कर्णनादः श्रोत्ररोग इत्युक्तः। न च श्रोत्रेन्द्रियस्यास्ति नादः किं तर्हि तदधिष्ठानस्य कर्णस्य। तस्मादयं श्रोत्रेण स्थानिना कर्णमधिष्ठानमुक्तवान्। स्थानेन स्थानी यथा- जिह्वा रसं गृह्णाति। तत्र न जिह्वा रसं गृह्णाति किं तर्हि रसना।

११ तादर्थ्यं नाम - यत्प्रयोजनार्थं प्रवर्त्तते यो भावस्तेनैव व्यपदिश्यते। यथा- मदनमधुकलम्बा इत्यादिनि छर्दनानि- छर्दनप्रयोजनानीत्यर्थः।

१२ साहचर्यं नाम- यो येन नित्यं सम्बन्ध उपलभ्यते स तस्मात् सम्बन्धात्तमेव सम्बन्धिशब्दं लभते। यथा- मथ्यमानाद् धूमं दृष्ट्वाज्वलद्धासुरं वह्निद्रव्यमवश्यमभ्युत्थितो वह्निरित्येव।

१३ कर्म नाम- यत्र कर्मकर्मेति चोपचर्यते। यथोच्यते- मुनयः प्रशमं जग्मुः। न चाग्रामस्थानीयः कश्चित्प्रशमोऽस्ति। किं तर्हि इन्द्रियाणां विषयेभ्यः केवलं शक्तिनियमः प्रशमः। अथ च गतिः- कर्मविषयेभ्यस्त्विन्द्रियाणां क्रियानिवृत्तिः। तदेव कर्मेत्युक्तम्।

१४ गुणनिमित्तं नाम - यत्कस्य विभूतिः प्रशंसादिका ख्याप्यते। धर्म्यं यशस्यमायुष्यं लोकद्वयपरायणम् अनुमोदामहे ब्रह्मचर्यमेकान्तनिर्मलम्॥ इति ब्रह्मचर्यस्य होमे गुणाः नाब्रह्मचर्यस्येति।

१५ चेष्टानिमित्तं नाम - यस्मिन्नाममात्रं कस्यचित् क्रियया भवति भावस्य। नात्र प्रस्पन्दक्रियेष्टा। यथा- दीपवदस्य ज्ञानं ज्वलति इत्युच्यते। न च ज्ञानस्य प्रदीपस्येवार्चीषि सन्ति ऊर्ध्वगामीनि दीपवद्वा सन्निकृष्टानि द्रव्यान्तराणि दहन्ति। रूपं वा स्पर्शं वा तैलादिकोपादानम्। किन्तु प्रकाशक्रियामात्रं परिगृह्य ज्वलतीति प्रशंसाकर्मणि क्रोधभयशोकलोभहर्षेर्ष्यामोहादिभिरुपहतं विज्ञानं मलोपहतदर्पणवदप्रकाशवृत्ति भवेत्।

१६ मूलसंज्ञा नाम - या लोकेऽन्यस्मिन्नर्थे प्रसिद्धा तन्त्रे चान्यस्मिन् अर्थे निवेशिता। यथा - निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा। सम्प्राप्तिश्च इति। रूपं च लोके नीलपीतलोहितादि प्रसिद्धं स्वशास्त्रे संज्ञया तु रूपं लिङ्गं लक्षणमिति।

१७ तात्स्थ्यं नाम- यदन्यस्यैवार्थस्य तत्स्थत्वादन्यस्यैव कल्प्यते। तद्यथा - बस्तिमेहनयोः शूलम् इति। तत्र पुंसंस्थेन कारणेन बस्तिमेहनोरिति कल्प्यते। चैतन्याभावे बस्तिमेहनयोः सतोरपि शूलाभावात् तत्प्रदेशस्थितत्वात्तयोरित्युपचार्यते ।

तन्त्रदोषाः

१ अप्रसिद्धशब्दं २ दुःप्रणीतम् ३ असङ्गतार्थं ४ असुखरोहि ५ विरुद्धं ६ अतिविस्तृतं ७ अतिसंक्षिप्तं
८ अप्रयोजनं ९ भिन्नक्रमं १० संदिग्धं ११ पुनरुक्तं १२ निःप्रमाणकं १३ असमाप्तार्थं १४ अपानर्थकं
१५ व्यवहतं।
१ अप्रसिद्धशब्दम् २ दुःप्रणीतम् ३ असङ्गतार्थम् ४ असुखरोहि ५ विरुद्धम् ६ अतिविस्तृतम् ७ अतिसंक्षिप्तम् ८ अप्रयोजनम् ९ भिन्नक्रमम् १० संदिग्धम् ११ पुनरुक्तम् १२ निःप्रमाणकम् १३ असमाप्तार्थम् १४ अपानर्थकम् १५ व्यवहतम्।
१ अप्रसिद्धशब्दं नाम- यल्लोके नातीव प्रसिद्धम्। यथा- उदक्यागमनलक्षणमसुखानाम्। इति। यथा वा आधारस्यासिपाणिधारेष्वकुशलयोगता। इति। अस्यार्थः- अकुनाम वृक्षः तस्य शलमिति।
२ दुष्प्रणीतं नाम सूत्रभाष्यप्रयोजनरहितम्।
३ असङ्गतार्थं नाम - यत्सूत्रेणासम्बद्धम्।
४ असुखरोहि पदं नाम - यत्पदसन्निवेशस्य विषमतया दुःखेनोच्चार्यते चर्करीतादिप्रायम्। यथा - धातर्यरिप्रदम्। इति।
५ विरुद्धं नाम - यद् दृष्टान्तसिद्धन्तसमयैर्विरुद्धम्। यथा कश्चिद्वेदेन्नित्यः पुरुषोऽकृतकत्वादिति हेतुः घट इति दृष्टान्तविरुद्धम्। तथा -मधुराम्ललवणाः कफं शमयन्ति। कटुतिक्तकषायाः वातं जयन्ति इति वैद्यकसिद्धान्त्विरुद्धमेतत्। समयविरुद्धं नाम - यथा - यः समयः पूर्वाचार्यैस्तत्वदर्शिभिः कृतस्तं व्युत्क्रम्यागच्छति। यथा - न लोष्टं विमृद्नीयात् न तृणं छिन्द्यात् इति। एतत् तत्वदर्शिभिरुक्तत्वाल्लोष्टमर्दनादि न क्रियते। न तु हेतुरत्रास्ति।
६ अतिविस्तृतं नाम - यथा - मधुरादिस्कन्धं ब्रुवन् यावन्ति मधुराणि जगति सन्ति मधुरप्रायाणि मधुरप्रभवाणि तान्येशेषाणि यद्यभिदधाति तदाऽतिविस्तृतत्वं स्यात्।
७ अतिसंक्षिप्तं नाम - यथा- योगशतकप्रायम्। यथा वा- हेतुलिङ्गौषधोद्देश एव क्रियते न तु तदवबोधकवाक्यानामिति शेषः।
८ अप्रयोजनं नाम- यथा- इत्याचारः समासेन इत्येतावद्यदि वदेत् न तु ब्रूयात् यं प्राप्नोति समाचरन्। आयुरारोग्यमैश्वर्यम् इत्यादि तदा कश्चिदनुतिष्ठेदिति।
९ भिन्नक्रमं नाम- पूर्वं येनानुक्रमेणोक्तं न तेनैव निर्दिश्यते प्रयोजनान्तरासम्भवेऽपि। यथा- वातपित्तकफानुद्दिश्य तत्र रूक्षो लघुः इत्यादौ वातगुणनिर्देशमकृत्वैव पित्तस्य विदधित। एवं क्रमो भिन्नो भवेत्।
१० संदिग्धं नाम - यथा - किमकालमृत्युरस्ति उत नास्ति इत्युभयत्र हेत्वाभासपरिग्रहात् संशयः।
११ पुनरुक्तं नाम- योऽर्थ उक्तोऽपि पुनरुच्यते।
१२ निःप्रमाणं नाम यथा- पाक्यं शीतकषायं वा मुस्तपर्पटकम् इति।
१३ असमाप्तार्थं नाम - अत्र तावदुच्यते। परतोऽपि चेदित्येतत्ततः समाप्तार्थत्वान्न ज्ञायते किमनेन कार्यमिति।
१४ अपानर्थकम्
१५ व्याहतं नाम -यथा- पूर्वया वाक्ययुक्त्याऽपरा व्याहन्यते अपरया पूर्वा वा। यथा- अनास्थाप्या मेहिनः इत्युक्त्वा पुनरास्थपनमनुजज्ञे। मुस्तादेर्निरूहे पपाठ- वातासृक्शोफमेहार्शोगुल्मविण्मूत्रसङ्ग्रहम् इत्यादि। तदात्र विधिनिषेधयोः परस्परविरोधाद्व्याहतत्वम्। अत्र सामाधानार्थं विपुलमतय एवमभिदधुः- प्रमेहिणमास्थाप्य निषेधाद् बस्तिकल्पे पुनरनुज्ञानात् तन्त्रकृतोऽभिप्रायविशेष ईदृगनुमीयते - मेहिनो वातस्य प्रबलत्वेन बस्तिमन्तरेण नान्यस्तथाविध उपक्रमोऽस्ति तस्मात्तस्यावस्थातुरवशाद्योज्यो बस्तिः। यदाऽऽर्तमेहिनो दृश्यते पवनस्याल्पत्वे त्व तदोषक्रमान्तरेणैव चिकित्सितुं शक्य इति तदा बस्तिर्न योज्य इति प्रतिपादयितुंमेवं विधो विन्यासः कृतः।
इन्दु तन्त्रयुक्तिः

तत्राधिकरणं योगो हेत्वर्थोर्थः पदस्य च।
प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम्॥
उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः।
प्रङ्गैकान्तनैकान्ताः सापवर्गो विपर्ययः॥
पूर्वपक्षविधानानुमतव्याख्यानसंशायाः।
अतीतानागतापेक्षा स्वसंज्ञोह्यसमुच्चयाः॥
निदर्शनं निर्वचनं नियोगोऽथ विकल्पनम्।
प्रत्युत्सारस्तथोद्धारः सम्भवस्तन्त्रयुक्तयः॥ अ सं उ ५०
तत्रेत्यादिना युक्तयः उच्यन्ते। वाक्यार्थानां योजनं युक्तिः याभिर्योजनाभिर्विना तन्त्रमसंबद्धं भवति। का युक्तयः। तत्र तेष्वधिकरणं नाम अधिकरणं प्रस्तावः नामान्येनोक्तमप्यर्थजातं यद्बलाद्विशेऽवस्थाप्यते तदधिकरणम्। यथा सप्ताहादौधं केचिदाहुरन्ये दशाहत इति वाक्यार्थः सामान्येन प्रवृत्तोऽधिकरणवशाज्ज्वराख्ये विशेषेऽवस्थाप्यते॥१॥
योगो नाम योगः सम्बन्धः स च पदार्थयोर्वाक्यार्थयोर्वा। तत्र पदार्थयोः साध्यसाधकभावेन। यथा - रागादिरोगाः इत्यादौ समूला इत्यस्यापास्ता

इत्यनेन वाक्यार्थयोर्यथा जीर्णाजीर्णविशङ्कायां पुनरुष्णोदकं पिबेदित्यस्य तेनोद्गारविशुद्धिः स्यात्ततश्च लघुता रुचिरित्यनेन॥२॥

हेत्वर्थो नाम यदेकत्रोच्यमानमन्यत्रापि तथैवोपयुज्यते। यथा तत्रैकैकत्र शाखायामित्यस्यद्यवेद्योक्त्या शेषा वेद्या इति गम्यते॥३॥

पदार्थो नाम पदेनार्थोऽवगम्यते। यथा गुर्वादयो गुणशब्दादवगम्यन्ते॥४॥

प्रदेशो नाम यत्रैकदेशस्योच्यमानस्यार्थस्य प्रसादादनुच्यमानोपि तच्छेषापद्यते स प्रदेशः। यथा कुकूलादिपाकक्रमेण लाघवातिशयोऽपूपानामुच्यमानानां प्रसादादनुच्यमानान्यपि कृतान्नानि तथावगम्यन्ते॥५॥

निदेशोनाम यच्छब्दमात्रेण निर्दिष्टानां स्वरूपविशेषप्रदर्शनाय पुनः कीर्त्तनं निर्देशः। यथा वस्तिव्यापदि द्रुतोत्क्षिप्त इत्यादिकमुद्दिश्य तेषु दोषं प्रदर्शयितुमनुच्छ्वास्य तु बद्ध इत्युच्यते॥७॥

वाक्यशेषोनाम यस्मिन् वाक्ये एकदेशः शिष्यते व्याख्यानकालेत्वनुच्यमानोप्यापतति स वाक्यशेषः। यथा रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता इत्यत्र उच्यत इति वाक्यशेषः। यथा रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता इत्यत्र उच्यत इति वाक्यशेषः॥८॥

प्रयोजनं नाम यत् सम्पादयितुं क्रिया ह्यारभ्यते तत्प्रयोजनम्। यथा सदोषेषु दोषशेषपाचनमग्निसन्धुक्षणं च सम्पादयितुमौषधपानमरभ्यते॥९॥

उपदेशो नाम शुद्धस्याप्तवचनस्य कीर्त्तनमुपदेशः। यथा गर्भस्तु मातुः पृष्ठाभिमुखो ललाटे कृताञ्जलिः संकुचिताङ्ग इत्येवमादि॥१०॥

अपदेशो नाम शुद्धस्याप्तवचनस्य प्रतिज्ञातस्य साधनहेतुरपदेशः। यथा अहितायोत्तरोत्तरं दुष्टा वातादय इत्यस्यां प्रतिज्ञायां दुष्परिहरत्वादिति हेतुः॥११॥

अतिदेशो नाम अन्यसम्बन्धिनां धर्माणामन्यत्रावस्थापमतिदेशः। यथा पालक्यासम्बन्धिनां धर्माणां चुच्चावस्थापनम्॥१२॥

अर्थापत्तिर्नाम यदेकस्मिन्नर्थ उच्यमाने अनुक्तस्याप्यर्थस्य बलादागमनं सार्थापत्तिः। यथा पक्वे जले जीर्णेप्यामं न पेयमित्युच्यमाने अभोजनादित्यनुच्यमानस्यापि सामर्थ्यादागमनम्॥१३॥

निर्णयो नाम उद्दिष्टानामर्थानामनुद्दिष्टेन निराकाङ्क्षत्वापदनं निर्णयः। यथा वर्त्मरोगविज्ञानीयोक्तानां रोगाणां वर्त्मरोगप्रतिषेधनिराकाङ्क्षत्वापादनम्॥१४॥

प्रसङ्गो नाम यदप्राकरणिकस्यापि वस्तुनः किञ्चित् सम्बन्धेन यत् कीर्तनं स हि प्रसङ्गः। यथा वमनप्रस्तावे धूमान्तैः प्रायः सर्वैरित्यादेरप्रकारणिकस्य कीर्त्तनम्॥१५॥

एकान्तो नाम यत् पक्षान्तरव्यावर्त्तकं तदेकान्तः। यथा दोषहेतुजत्वोक्तेर्निजत्वं न कदाचिदपि बाह्यहेतुजं तदेकान्तः। यथा दोषहेतुजत्वोक्तेर्निजत्वं न कदाचिदपि बाह्यहेतुजं व्याप्नोति॥१६॥

नैकान्तो नाम यदुच्यमानमप्यवश्यम्भावित्वेननियतं स नैकान्तः। यथा ज्वरस्तु जातः षड्रात्रादशिवनीषु निवर्तत इत्येतदुक्तमप्यवश्यम्भावित्वेनानियतम्॥१७॥

अपवर्गो नाम सामान्योक्त्यनुप्रविष्टस्य विशेषेणाकर्षणं सोपवर्गः। यथा मधुरं श्लेष्मळमित्युक्तावनुप्रविष्टेषु जीर्णशाल्यादिषु शब्देनाकर्षणम्॥१८॥

विपर्ययो नाम उक्तस्यान्यथाभावो विपर्ययः। यथा निदानोक्तानामनुपशयो भवति तद्विपरीतानां चोपशयः॥१९॥

पूर्वपक्षो नाम परपतिज्ञातानुपपत्तिप्रदर्शनपरो वाक्यसमुदायः पूर्वपक्षः यथा षड्रसवादिनं प्रत्यनेकरसप्रतिपादकानि वाक्यानि॥२०॥

विधानं नाम तन्त्रस्य कर्ता विशिष्टा या पदादिरचना कृता तद्विधानम्। यथा सर्वविरोधपरिज्ञानद्व्यवहारोच्छित्तिर्माभूदित्यभिप्रायेणोक्तं न च तद्विज्ञानमेकान्तभद्रकमिति॥ २१॥

अनुमतं नाम परपक्षस्य भिन्नस्याप्याङ्गीकरणमनुमतम्। यथा वस्तिविधाने कल्पनाया मतेषु दोषौषधादिबलतः सर्वमेतत् प्रमाणयेदित्यङ्गीकरणम्॥२२॥

व्याख्यानं नाम सङ्क्षेपेणोक्तस्यार्थस्य विस्तारेणाख्यानं व्याख्यानम्। अथवा स्फुटैः शब्दैरनभिहितं गुरुपरम्पर्यक्रमागतम्॥२३॥

संशयो नाम विरुद्धानां पक्षाणामनिश्चयः संशयः। यथा विषवेगसंभवपक्षेषु॥२४॥

अतीतापेक्षा नाम यत्रातीतं पदमापेक्ष्य सम्बन्धार्थता भवति सातितापेक्षा। यथा च स्वेद्यादयः स्नेह्याः इत्युक्ते नत्वतिमन्दाग्निरित्यादेः स्नेह्याः इत्यपेक्षते। यथा च ज्वरे लङ्घनं कुर्वीतेति सूत्रोक्तं लङ्घनमपेक्षते॥२५॥

अनागतापेक्षा नाम यत्रातीतं पदमपेक्ष्य सम्बन्धार्थता भवति सानागतापेक्षा। यथा ततो नावनगण्डूषेत्यादिना दिनचर्यायां नस्यादिविधयोऽपेक्ष्यन्ते॥२६॥

स्वसंज्ञा नाम स्वतन्त्रे एवमन्यस्मिञ्छास्त्रे न श्रूयते सा स्वसंज्ञा। यथा आपानोजेन्ताक इत्येवमादि॥२७॥

ऊह्यं नाम यत् भिषिजा स्वप्रज्ञया शब्देनानुक्तमपि व्यवस्थाप्यते तदूह्यम्। यथा द्रव्यं जह्यादयौगिकमिति यन्न यौगिकं तच्छब्देन नोक्तमपि प्रज्ञया व्यपस्थाप्यते॥२८॥

समुच्चयो नाम एकस्मिन् विहिते तदविरोधेन तत्रैव द्वितीयस्य विधानं समुच्चयः। यथा वातस्योपक्रमः स्नेहः स्वेदः इत्यादि॥२९॥

निदर्शनं नाम साध्यैकदेशो दृष्टान्तो निदर्शनम्। यथा आमदोषेषु त्रिविधेषु लङ्घनपाचनशोधनानि दृष्टान्तः। एवमन्यानपि व्याधीन्

स्वनिदानविपर्ययात् चिकित्सेदित्यादेः॥३०॥
निर्वचनं नाम संज्ञयोक्तस्य तदर्थेन योजनं निर्वचनं। यथा सूचीभिरिव गात्राणि भिद्यतीति विषूचिका॥३१॥
नियोगो नाम क्रियाणां व्यापाराणां नियोगः। यथा भवता स्वेदमूर्च्छापरीतेनापि नैषा पिण्डिका विमोक्तव्येति॥३२॥
विकल्पो नाम क्रमेण यौगपद्येन वा सम्भविनां पक्षाणां कीर्त्तनम्। यथा कुर्वीत लङ्घनं प्रग्रूपेषु ज्वरादौ वा॥३३॥
प्रत्युत्सारो नाम यत्रोपपत्तिं दर्शयन्तः परस्परमतानि निवारयन्ति। यथा गर्भिणी अष्टमे मासि क्षीरयवागू सर्पिष्मतीं पिबेत् नेति खण्डकाप्यः गर्भस्य पैङ्गळ्या बाधभयात्। अस्तु पैङ्गळया बाधास्तथाप्येवं कुर्वती निरुजं बलवर्णाद्युपेतमपत्यं जनयतीति भगवानत्रेयः॥३४॥
उद्धारो नाम यच्छास्त्रे चोद्यस्य समाधानम्। यथा चित्रकर्मगुणकृत् गुरुणोक्तो वस्तिरित्यादि यावत् सर्वतः कथमपोहति दोषानिति चोद्यस्य स्तिमितमारुतवश्यमेतदित्यादि समाधानम्॥३५॥
सम्भवो नाम किमप्यन्यत्रादर्शनाद्येन नियमेन स्थाप्यते स सम्भवः। यथा सर्वरोगेषु हेतुलिङ्गौषधादीनां सामान्योक्तौ वातादिविशेषणास्थापनं सम्भवप्रसादाल्लभ्यम्॥३६॥ एवं तन्त्रयुक्तयः॥
यद्यपि भट्टारकप्रस्थानेन च परिप्रश्नव्याकरणव्युत्क्रान्ताभिधानहेत्वाख्याश्चतस्रोवशिष्यन्ते तथापि आचार्येण तन्त्रेणानिबद्धा इत्यत्र नोच्यन्ते। अथवा तन्त्रयुक्तित्वमेव तासां नाङ्गीक्रियते। तत्र चाग्न्यतियोगोक्तौ वातादिविशेषेणावस्थापनं सम्भवप्रसादाल्लभ्यमेवाद्युक्तम्॥
सरसः सुप्तपद्मस्य रविदीधितयो यथा।
यथा गृहस्य दीपाभास्तथा तन्त्रस्ययुक्तयः॥
अधीयानोपि तन्त्राणि तन्त्रयुक्त्यविचक्षणः।
नाधिगच्छति तन्त्रार्थमर्थं भाग्यक्षये यथा॥
सरस इत्यादि सुबोधम्। तन्त्रयुक्त्यविचक्षणः एतासु षट्त्रिंशत्तन्त्रयुक्तिष्वसमर्थस्तन्त्रार्थं नाधिगच्छति न प्राप्नोति यथा भाग्यक्षये धनम्॥
वाक्यार्थयोजनादेता युक्तयस्त्विष्टसिद्धिदाः।
असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधकाः॥
लीनव्यत्यासलेशोक्तिगदितानां प्रकाशकाः।
वाक्यन्यायोदधेः सारं गृहीत्वैवं व्यवस्थिताः॥
एता युक्तयो वाक्यार्थस्य योजनाद्धेतोः स्वेष्टसिद्धिं ददति। यानि चासद्वादिनामर्थसम्बन्धप्रदर्शनपराणि वाक्यानि तेषां प्रतिषेधकाः। लीनगदितानां व्यत्यासगदितानां च प्रकाशकाः। लीनं तद्यत् स्फुटं वक्तुं न पार्यते। व्यत्यासः परस्परविवर्तनम्। लेशोंशेन स्पर्शः। उक्तिर्वचनभङ्गिः। एताश्च युक्तयो वाक्यन्यायोदधेरसंख्यप्रकारसम्भविनो गेयस्येव जातयः सारं गृहित्वा एवं व्यवस्थिताः। पदार्थयोजनास्तु व्युत्पन्नानां प्रसिद्धा एवेत्यत आचार्येण नोक्ताः।

तत्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च ॥४१॥
प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम् ।
उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः ॥४२॥
प्रसङ्गैकान्तनैकान्ताः सापवर्गो विपर्ययः ।
पूर्वपक्षविधानानुमतव्याख्यानसंशयाः ॥४३॥
अतीतानागतावेक्षास्वसञ्ज्ञोह्यसमुच्चयाः ।
निदर्शनं निर्वचनं सन्नियोगो विकल्पनम् ॥४४॥
प्रत्युत्सारस्तथोद्धारः सम्भवस्तन्त्रयुक्तयः ।४५। (च.सं.सि.१२)

तन्त्रयुक्तीरेवाह - तत्रेत्यादि।

अधिकरणं नाम यमर्थमधिकृत्य प्रवर्तते कर्ता; यथा 'विघ्नभूता यदा रोगा'(सू.अ.१) इत्यादि। अत्र रोगादिकमधिकृत्यायुर्वेदो महर्षिभिः कृत इति 'रोगाः'इत्यधिकरणम् ।

योगो नाम योजना व्यस्तानां पदानामेकीकरणम् । उदाहरणं तावद्यथा- प्रतिज्ञा हेतूदाहरणोपनयनिगमनानि; तत्र प्रतिज्ञा- मातृजश्चायं गर्भः, हेतुः- मातरमन्तरेण गर्भानुपपत्तेः, दृष्टान्तः- कूटागारः, उपनयः- यथा नानाद्रव्यसमुदायात् कूटागारस्तथा गर्भनिर्वर्तनं, तस्मान्मातृजश्चायमित्येषां प्रतिज्ञायोगः; एवमन्येऽपि योगार्था व्याख्येयाः।

हेत्वर्थो नामयदन्यत्राभिहितमन्यत्रोपपद्यते; यथा- 'समानगुणाभ्यासो हि धातूनां वृद्धिकारणम्'(सू.अ.१२) इति वातमधिकृत्योक्तं, तत्र वातस्येति वक्तव्ये यदयं समानशब्दं धातूनामिति करोति, तेन यथा वायोस्तथा रसादीनामपि समानगुणाभ्यासो वृद्धिकारणमिति गम्यते ।

पदार्थो नाम पदस्य पदयोः पदानां वाऽर्थः पदार्थः। तत्र द्रव्यमितिपदेन खादयश्चेतनाषष्ठा उच्यन्ते; पदयोरर्थो नाम यथा- 'आयुषो वेद'इति पदयोरायुर्बोधकं तन्त्रमित्यर्थः; एवं पदानामप्यर्थ उदाहार्यः।

प्रदेशो नाम यद्बहुत्वादर्थस्य कात्स्न्र्येनाभिधातुमशक्यमेकदेशेनाभिधीयते; यथा- 'अनुपानैकदेशोऽयमुक्तः प्रायोपयोगिकः'(सू.अ.२७) इत्यादि।

उद्देशो नाम सङ्क्षेपाभिधानं; यथा- 'हेतुलिङ्गौषधज्ञानं'(सू.अ.१), अनेन सर्वायुर्वेदाभिधेयोद्देशः।

निर्देशो नाम सङ्ख्येयोक्तस्य विवरणं; यथा- हेतुलिङ्गौषधस्य पुनः प्रपञ्चनं 'सर्वदा सर्वभावानां'इत्यादिना 'इत्युक्तं कारणं'(सू.अ.१) इत्यन्तेन कारणप्रपञ्चनमित्यादि।

वाक्यशेषो नाम यल्लाघवार्थमाचार्येण वाक्येषु पदमकृतं गम्यमानतया पूर्यते; यथा 'प्रवृत्तिर्हेतुभावानां'(सू.अ.१६) इत्यत्र 'अस्ति'इति पदं पूर्यते, तथा 'जाङ्गलजै रसैः'इत्यत्र मांसशब्दः पूर्यते। वाक्येषु चैत एव पदाः शेषाः क्रियन्ते, येऽनिवेशिता अपि प्रतीयन्ते।

प्रयोजनं नाम यदर्थं कामयमानः प्रवर्तते; यथा- 'धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्'(सू.अ.१)।

उपदेशो नामाप्तानुशासनं; यथा- 'स्नेहमग्रे प्रयुञ्जीत ततः स्वेदमनन्तरम्'(सू.अ.१३) इत्यादि ।

अपदेशो नाम यत्प्रतिज्ञातार्थसाधनाय हेतुवचनं; यथा- 'वाताज्जलं जलाद्देशं देशात् कालं स्वभावतः। विद्याद्दुष्परिहार्यत्वात्'(वि.अ.३) इत्यादि, तत्र प्रतिज्ञातार्थस्य हेतुवचनं- दुष्परिहार्यत्वादिति ।

अतिदेशो नाम यत्किञ्चिदेव प्रकाश्यार्थमनुक्तार्थसाधनायैव एवमन्यदपि प्रत्येतव्यमिति परिभाष्यते; यथा- 'यच्चान्यदपि किञ्चित् स्यादनुक्तमिह पूजितम्। वृतं तदपि चात्रेयः सदैवाभ्यनुमन्यते'(सू.अ.८) इति ।

अर्थापत्तिर्नाम यदकिर्तितमर्थादापद्यते साऽर्थापत्तिः; यथा- नक्तं दधिभोजननिषेधः, अर्थाद्दिवा भुञ्जीतेत्यापद्यते ।

निर्णयो नाम विचारितस्यार्थस्य व्यवस्थापनं; यथा- चतुष्पदभेषजत्वादि विचारं कृत्वाऽभिधीयते-'यदुक्तं षोडशकलं पूर्वाध्याये भेषजंतद्युक्ति युक्तमलमारोग्याय'
(सू.अ.१०) इति।

प्रसङ्गो नाम पूर्वाभिहितस्यार्थस्य प्रकरणागतत्वादिना पुनरभिधानं; यथा- 'तत्रातिप्रभावतां दृश्यानातिमात्रदर्शनमतियोगः'(सू.अ.११) एवमाद्यभिधाय, पुनः 'अत्युग्रशब्दश्रवणाच्छ्रवणात् सर्वशो न च'(शा.अ.१) इत्यादिना पूर्वोक्त एवार्थोऽभिधीयते।

एकान्तो नाम यदवधारणेनोच्यते; यथा- निजः शरीरदोषोत्थः, त्रिवृद्विरेचयतीत्यादि। अनैकान्तो नाम अन्यतरपक्षानवधारणं, यथा- 'ये ह्यातुराः केवलाद्भेषजादृते म्रियन्ते, न च ते सर्व एव भेषजोपपन्नाः समुत्तिष्ठेरन्'(सू.अ.१०) इत्यादि ।

अपवर्गो नाम साकल्येनोद्दिष्टस्यैकदेशापकर्षणं; यथा- 'न पर्युषितान्नमाददीतान्यत्र मांसहरितकशुष्कशाकफलभक्ष्येभ्यः'(सू.अ.८) इति। अत्र हि सामान्येन पर्युषितभक्षणनिषेधं कृत्वा मांसादेः पर्युषितस्यापि भक्षणमपकृष्य विधीयते।

विपर्ययो नाम अपकृष्टात् प्रतीपोदाहरणं; यथा- 'निदानोक्तान्यस्य नोपशेरते विपरीतानि चोपशेरते'(नि.अ.३) इति।

पूर्वपक्षो नाम प्रतिज्ञातार्थसन्दूषकं वाक्यं; यथा- 'मत्स्यान्न पयसाऽभ्यवहरेत्'इति प्रतिज्ञातस्यार्थस्य 'सर्वानेव मत्स्यान्न पयसाऽभ्यवहरेदन्यत्र चिलिचिमात्'(सू.अ.२६) इति।

विधानं नाम सूत्रकारश्च विधाय वर्णयति; यथा- 'मलायनानि बाध्यन्ते दुष्टैर्मात्राधिकैर्मलैः'इत्यत्र दुष्टिशब्देन मलानां

हीनत्वमधिकत्वमाचार्यगृहीतमाचार्यो वर्णयति- 'मलवृद्धिं गुरुतया लाघवान्मलसङ्क्षयम्। मलायनानां बुध्येत सङ्गोत्सर्गादतीव च'(सू.अ.७) इति; केचित्तु प्रकरणानुपूर्व्याऽर्थाभिधानं विधानमाहुः, यथा- रसरुधिरमांसमेदोस्थिमज्जशुक्राणामुत्पादक्रमानुरोधेनाभिधानम्। अनुमतं नाम एकीयमतस्यानिवारणेनानुमननं; यथा- 'गर्भशल्यस्य जरायुःप्रपातनं कर्म संशमनमित्येके'(शा.अ.८) इत्याद्येकीयमतं प्रतिपाद्याप्रतिषेधादनुमन्यते। व्याख्यानं नाम यत् सर्वबुद्ध्यविषयं व्याक्रियते, यथा- 'प्रथमे मासि सम्मूर्च्छितः सर्वधातुकलुषीकृतः खेटभूतो भवत्यव्यक्तविग्रहः'(शा.अ.४) इत्यादिनाऽस्मदाद्यविदितार्थव्याकरणम्।

संशयो नाम विशेषाकाङ्क्षानिर्धारितोभयविषयज्ञानं, यथा- 'मातरं पितरं चैके मन्यन्ते जन्मकारणम्। स्वभावं परनिर्माणं यदृच्छां चापरे जनाः॥'(सू.अ.११) इत्यादिनोक्तः संशयः।

अतीतावेक्षणं नाम यदतीतमेवोच्यते; यथा- 'सा कुटी तच्च शयनं ज्वरं संशमयत्यपि'(चि.अ.३) इत्यत्र स्वेदाध्यायविहितकुट्यादिकमतीतमवेक्षते अनागतावेक्षणं नाम यदनागतं विधिं प्रमाणिकृत्यार्थसाधनं; यथा- 'अथवा तिक्तसर्पिषः'इत्याद्यनागतावेक्षणेनोच्यते। स्वसंज्ञा नाम या तन्त्रकारैर्व्यवहारार्थं संज्ञाक्रियते; यथा- जेन्ताकहोलाकादिका स्वसंज्ञा।

ऊह्यं नाम यदनिबद्धं ग्रन्थे प्रज्ञया तर्क्यत्वेनोपदिश्यते; यथा- 'परिसङ्ख्यातमपि यद्यद् द्रव्यमयौगिकं मन्येत तत्तदपकर्षयेत्'(वि.अ.८) इति।

समुच्चयो नाम यदिदं चेदं चेति कृत्वा विधीयते; यथा- 'वर्णश्च स्वरश्च'(इ.अ.१) इत्यादि।

निदर्शनं नाम- मूर्खविदुषां बुद्धिसाम्यविषयो दृष्टान्तः; यथा- 'विज्ञातममृतं यथा'(सू.अ.१) इत्यादि।

निर्वचनं नाम पण्डितबुद्धिगम्यो दृष्टान्तः; यथा- 'ज्ञायते नित्यगस्येव कालस्यात्ययकारणम्'(सू.अ.१६) इति।

निदर्शननिर्वचनयोरयं विशेषः- यन्निदर्शनं मूर्खविदुषां बुद्धिसामान्यविषयं, निर्वचनं तु पण्डितबुद्धिवेद्यमेव; किंवा निर्वचनं निरुक्तिः- यथा- 'विविधं सर्पति यतो विसर्पस्तेन संज्ञितः'(चि.अ.२१) इत्यादि। नियोगो नाम अवश्यानुष्ठेयतया विधानं; यथा- 'न त्वया स्वेदमूर्च्छापरीतेनापि पिण्डिकैषा विमोक्तव्या'(सू.अ.१४) इत्यादि। विकल्पः पाक्षिकाभिधानं; यथा- 'सारोदकं वाऽथ कुशोदकं वा'(चि.अ.६) इत्यादि।

प्रत्युत्सारो नाम उपपत्त्या परमतनिवारणं; यथा वार्योविदः प्राह- 'रसजानि तु भूतानि रजसा व्याधयः स्मृताः'(सू.अ.२५) इत्यादि, हिरण्याक्षा निषेधयति- 'न ह्यात्मा रजसः स्मृतः'इत्यादि।

उद्धारो नाम परपक्षदूषणं कृत्वा स्वपक्षोद्धरणं; यथा- 'येषामेव हि भावानां सम्पत् सञ्जनयेन्नरम्। तेषामेव हि भावानां विपद्व्याधीनुदीरयेत्'(सू.अ.२५) इत्यादिना स्वपक्षोद्धरणम्।

सम्भवो नाम यद्यस्मिन्नुपपद्यते स तस्य सम्भवः; यथा- मुखे पिप्लुव्यङ्गनीलिकादयः सम्भवन्तीत्यादि। इत्येताः षट्त्रिंशत्तन्त्रयुक्तयो व्याहृताः।

भट्टारहरिचन्द्रेण त्वन्याश्चतस्रस्तन्त्रयुक्तयः परिप्रश्न-व्याकरण-व्युत्क्रान्ताभिधान-हेत्वाख्या व्याहृताः; ताश्च तन्त्रेऽपठितत्वादेता स्वेवान्तर्भावनीयाः। तत्र परिप्रश्न उद्देशेऽन्तर्भवति, व्याकरणं तु व्याख्याने, व्युत्क्रान्ताभिधानं निर्देशप्रभेदः, हेतुशब्देन यानि प्रत्यक्षादीनि प्रमाणान्युक्तानि तानि हेतावन्तर्भवन्ति। व्याख्या पञ्चदशप्रकारा, सप्तविधा कल्पना, एकविंशतिरर्थाश्रयाः, सप्तदश ताच्छील्यानि, चतुर्दश च तन्त्रदोषा भवन्ति, तदुत्तरतन्त्रे प्रतिपादितत्वान्नेह विलिखिता आचार्येण (?)॥४१-४४॥

तन्त्रे समासव्यासोक्ते भवन्त्येता हि कृत्स्नशः ॥४५॥
एकदेशेन दृश्यन्ते समासाभिहिते तथा ।४६।

सम्प्रति तन्त्रयुक्तीरुद्दिश्य तासां तन्त्रे एवानुसरणमाह- तन्त्रे समासव्यासोक्ते इत्यादि। समासाभिहिते इत्यनेन अतिसङ्क्षिप्ते तन्त्रे नावश्यं सर्वास्तन्त्रयुक्तयो भवन्तीति दर्शयति, किंवा समासाभिहिते एकदेशेन दृश्यन्ते इति सम्बन्धः॥४५।

यथाऽम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा ॥४६॥
प्रबोधनप्रकाशार्थास्तथा तन्त्रस्य युक्तयः ।४७।

तन्त्रयुक्तीनां कार्यं दृष्टान्तेन दर्शयन्नाह- यथेत्यादि। यथाऽम्बुजवनस्य सङ्कुचितस्य विस्तारकोऽर्कस्तथा तन्त्रे सङ्कुचितस्यार्थप्रदेशस्य विस्तारकास्तन्त्रयुक्तयः; प्रवोधनाद्विस्तारका भवन्तीत्यर्कदृष्टान्तेन दर्शयति; दीपदृष्टान्तेन तु यथा दीपः सन्तमेव तमसा पिहितं प्रकाशयतितथा हेत्वादिकास्तन्त्रयुक्तयः सन्तमर्थं गूढं प्रकाशयन्तीति दर्शयति। एतदेवार्थद्वयं तन्त्रयुक्तीनां सम्पाद्यमभिप्रेत्योक्तं प्रबोधनप्रकाशार्था इति॥४६॥-

एकस्मिन्नपि यस्येह शास्त्रे लब्धास्पदा मतिः ॥४७॥
स शास्त्रमन्यदप्याशु युक्तिज्ञत्वात् प्रबुध्यते ।
अधीयानोऽपि शास्त्राणि तन्त्रयुक्त्या विना भिषक् ।
नाधिगच्छति शास्त्रार्थानर्थान् भाग्यक्षये यथा ॥४८॥

सम्यक्शास्त्राभ्यासफलमाह- एकस्मिन्नपीत्यादि॥४७-४८॥

अथातस्तन्त्रयुक्तिमध्यायं व्याख्यास्यामः ॥१॥
यथोवाच भगवान् धन्वन्तरिः ॥२॥
स्वस्थवृत्तानन्तरं स्वस्थविध्यर्थस्य तन्त्रयुक्तिभिः प्रसाधानात्तन्त्रयुक्तयध्यायारम्भः- अथात इत्यादि। अथात इतिपूर्ववत् व्याख्येयम्। त्रायते शरीरमनेनेति तन्त्रं शास्त्रं चिकित्सा च, तस्य युक्तयो योजनास्तन्त्रयुक्तयः, ताअधिकृत्य कृतोऽध्यायः, तम्। वेदोत्पत्तिवदत्र तद्धितलोपः। ताश्च तन्त्रयोजना द्विविधाः- वाक्ययोजना अर्थयोजनाश्च;तत्र वाक्ययोजना योगोद्देशनिर्देशाद्याः, अर्थयोजना अधिकरणपदार्थादयः॥१-२॥
द्वात्रिंशत्तन्त्रयुक्तयो भवन्ति शास्त्रे ।
तद्यथा अधिकरणं(१), योगः(२), पदार्थः(३), हेत्वर्थः(४), उद्देशः(५), निर्देशः(६),उपदेशः(७), अपदेशः(८), प्रदेशः(९), अतिदेशः(१०), अपवर्जः(११), वाक्यशेषः(१२),अर्थापत्तिः(१३), विपर्ययः(१४), प्रसङ्गः(१५), एकान्तः(१६), अनेकान्तः(१७), पूर्वपक्षः(१८),निर्णयः(१९), अनुमतं(२०), विधानम्(२१), अनागतावेक्षणम्(२२), अतिक्रान्तावेक्षणं(२३),संशयः(२४), व्याख्यानं(२५), स्वसञ्ज्ञा(२६), निर्वचनं(२७), निदर्शनं(२८), नियोगः(२९),विकल्पः(३०), समुच्चयः(३१), ऊह्यम्(३२) इति ॥३॥
सङ्ख्याभेदेन तन्त्रयुक्तीर्निर्दिशन्नाह- द्वात्रिंशदित्यादि । शास्त्रे सौश्रुते । अधिकरणमित्यादि सङ्ख्येयनिर्देशादेव द्वात्रिंशत् सङ्ख्या लब्धा, अतस्तत्करणमन्यतन्त्रोक्ताः
षट्त्रिंशच्चत्वारिंशद्वा तन्त्रयुक्तय इति सङ्ख्यानिषेधार्थम्।शास्त्रे इत्यत्रान्ये समासेनेति पठित्वा व्याख्यानयन्ति- अन्यत्र विस्तरेण षट्त्रिंशच्चत्वारिंशद्वा तन्त्रायुक्तयः; अत्रद्वात्रिंशदिति समासेनोक्तम्। कतमास्तास्तन्त्रयुक्तय इत्याह- तद्यथेत्यादि। तद्यथेति निदर्शनम्। अधिकरणादीनिसूत्रकार एव व्याख्यास्यति ॥३॥
अत्रासां तन्त्रयुक्तीनां किं प्रयोजनम्? उच्यते- वाक्ययोजनमर्थयोजनं च ॥४॥
एवं तन्त्रयुक्तीरुद्देशतः प्रतीपाद्य तासां तन्त्रयुक्तीनां प्रयोजनमाह- अत्रासामित्यादि ।अत्र चिकित्साशास्त्रे। वाक्ययोजनमर्थयोजनं चेति वाक्यस्यासम्बद्धस्य योजनं सम्बन्धनं वाक्ययोजनं, लीनस्यासङ्गतस्य चार्थस्य प्रकाशनंसङ्गतीकरणं चार्थयोजनम् ।तत्र कासाञ्चित्तन्त्रयुक्तीनां योगोद्देशनिर्देशादीनां वाक्ययोजनं,कासाञ्चिदधिकरणपदार्थोह्यादीनामर्थयोजनं प्रयोजनम् ॥४॥
भवन्ति चात्र श्लोकाः-
असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधनम् ।
स्ववाक्यसिद्धिरपि च क्रियते तन्त्रयुक्तितः ॥५॥
व्यक्ता नोक्तास्तु ये ह्यार्था लीना ये चाप्यनिर्मलाः ।
लेशोक्ता ये च केचित्स्युस्तेषां चापि प्रसाधनम् ॥६॥
अत्रैव पूर्वाचार्यापठितौ श्लोकावधिकार्थख्यापनायाह- असद्वादिप्रयुक्तानामित्यादि। असद्वादिनो हि प्रतिरसपाकवादिनःपाकत्रयवादिनो गुणकर्तृत्ववादिनो वेत्यादयः। प्रतिषेधनम् अपदेशादिभिस्तन्त्रयुक्तिभिः परपक्षदूषणम्। स्ववाक्यसिद्धिःस्ववाक्यस्थापनं निर्णयाख्यया तन्त्रयुक्तया। यथा- प्रतिरसं पाक इत्यसद्वादिदर्शनमपदेशाख्यया तन्त्रयुक्तयाद्रव्यादिविज्ञाने निराकृतं, तत्रैव द्विविधः पाक इत्यादिस्वमतसाधनं निर्णयाख्यया तन्त्रयुक्तया कृतम्। व्यक्ता नोक्ताः स्पष्टतया नोक्ताः। लीना असम्यग्दर्शिताः। अनिर्मला लेशेनोक्ताः। तेषां प्रसाधनं योगप्रभृतिभिः क्रियते ॥५-६।
यथाऽम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा ।
प्रबोधस्य प्रकाशार्थं तथा तन्त्रस्य युक्तयः ॥७॥
केचिदत्र तन्त्रयुक्तीनां स्तुत्यर्थं श्लोकं पठन्ति- यथाऽम्बुजवनस्यार्क इत्यादि ।एष च श्लोकष्टीकासु मूलत्वेन नवर्णितः॥७॥
तत्र यमर्थमधिकृत्योच्यते तदधिकरणं; यथा रसं दोषं वा ॥८॥
अतः परमुद्दिष्टानां तन्त्रयुक्तीनां विवरणमाह- तत्रेत्यादि। तत्र तासु तन्त्रयुक्तिषु मध्ये; यमर्थमधिकृत्य अपरे अर्थाअभिधीयन्ते तदधिकरणसञ्ज्ञं भवति उदाहरणमाह- रसं दोषं वेति। एतेनैतदुक्तं भवति- रसं दोषं वा अधिकृत्ययत्तदुल्लेखाभावेऽप्यर्थजातमभिहितं तत् सर्वं तदधिकारे प्रतीयत इत्यर्थः॥८॥

येन वाक्यं युज्यते स योगः ।
यथा-
‘तैलं पिबेच्चामृतवल्लिनिम्बहिंस्राभयावृक्षकपिप्पलीभिः ।
सिद्धं बलाभ्यां च सदेवदारु हिताय नित्यं गलगण्डरोगे’ ।
इत्यत्र तैलं सिद्धं पिबेदिति प्रथमं वक्तव्ये तृतीयपादे सिद्धमिति प्रयुक्तं, एवं दूरस्थानामपिपदानामेकीकरणं योगः ॥९॥
योगाख्यां तन्त्रयुक्तिमाह- येनेत्यादि। येन व्यत्यासोक्तानां सन्निकृष्टविप्रकृष्टानां पदानामेकीकरणं स योग इत्यर्थः।व्यत्यासेनोक्तं पदयोगं

दर्शयन्नाह- तैलमित्यादि। विपर्ययेणोक्तस्य पदस्यैकीकरणं योग इत्यर्थः। येनेत्यादि सूत्रं,येन व्यत्यासोक्तानां इत्यादिसूत्रार्थः, यथेत्याद्युदाहरणम्। एवं सन्निकृष्टस्य विपर्ययोक्तस्य पदस्यापहरणंमुख्यमेकीकरणं प्रतिपाद्य दूरस्थानामप्युद्देशेनाह- एवं दूरस्थानामपीति॥९।

योऽर्थोऽभिहितः सूत्रे पदे वा स पदार्थः पदस्य पदयोः पदानां वाऽर्थः पदार्थः; अपरिमिताश्चपदार्थाः ।

यथा- स्नेहस्वेदाञ्जनेषु निर्दिष्टेषु द्वयोस्त्रयाणां वाऽर्थानामुपपत्तिर्दृश्यते, तत्र योऽर्थःपूर्वापरयोगसिद्धो भवति स ग्रहीतव्यः; यथा- 'वेदोत्पत्तिमध्यायं व्याख्यास्याम' इत्युक्तेसन्दिह्यते बुद्धिः- कतमस्य वेदस्योत्पत्तिं वक्ष्यतीति, यतः ऋग्वेदादयस्तु वेदाः; 'विदविचारणे, विद्लृ लाभे,' इत्येतयोश्च धात्वोरनेकार्थयोः प्रयोगात्, तत्र पूर्वापरयोगमुपलभ्यप्रतिपत्तिर्भवति- आयुर्वेदोत्पत्तिमयं विवक्षुरिति; एष पदार्थः ॥१०॥

पदार्थाभिधां तन्त्रयुक्तिमाह- योऽर्थोऽभिहित इत्यादि। पद्यते गम्यते येनार्थ इति सूत्रस्यापि पदत्वात् सूत्रे योऽर्थःप्रतिपादितः स पदार्थः। पदार्थख्यतन्त्रयुक्तिप्रतिपादकं लक्षणमभिधायेदानीं तद्व्याख्यातुकामः प्रथमं तदवयवस्यसमासमभिधत्ते- पदस्येत्यादि। अधुना बहुषु पदार्थेषु निर्धार्य विशिष्टपदार्थग्रहणाय पदार्थबहुत्वं प्रतिपादयति-अपरिमिता इत्यादि। कथमित्याह- यथेत्यादि। तत्र स्नेहशब्दे निर्दिष्टे हि गुणप्रेमसर्पिषां त्रयाणामर्थानामुपपत्तिर्दृश्यते,स्वेदशब्देनापि साग्निनिरग्निकयोरुष्मणोः प्राप्तिः, अञ्जनशब्देनापि नयनाञ्जनाभ्याङ्गयोः प्राप्तिः, तेषु पदार्थषुयादृशः पदार्थो गृह्यते तादृशमाह- तत्र योऽर्थ इत्यादि। पूर्वोक्तपरोक्तवाक्यसम्बन्धेनोपपन्नो योऽर्थो भवति स ग्रहीतव्यइत्यर्थः। उदाहरणमाह- यथा वेदोत्पत्तिमित्यादि। सन्दिह्यते सन्देहं गच्छतीत्यर्थः। कथं सन्दिह्यत इत्याह-कतमस्येत्यादि। यतः ऋग्वेदादयो वेदास्ततः कतमस्या वेदस्योत्पत्तिं वक्ष्यतीति सन्दिह्यते, तस्मिन् सन्देहे यथाप्रत्ययार्थः स्वीकर्तव्यस्तथाऽऽह- विदित्यादि- 'आयुर्वेदमिच्छाम इहोपदिश्यमानम्' इत्यस्मिन्नायुर्वेदशब्दः श्रूयते,अतोऽत्र वेद आयुर्वेद इत्यभिप्रायः ॥१०॥

यदन्यदुक्तमन्यार्थसाधकं भवति स हेत्वर्थः ।

यथा- मृत्पिण्डोऽद्भिः प्रक्लिद्यते तथा माषदुग्धप्रभृतिभिर्व्रणः प्रक्लिद्यत इति ॥११॥

हेत्वर्थतन्त्रयुक्तेर्लक्षणमाह- यदन्यदित्यादि। उदाहरणमाह- यथा मृदित्यादि। अत्र बाह्येन मृत्पिण्डदृष्टान्तेनमाषदुग्धयोगादिभिराभ्यन्तरो व्रणप्रक्लेदः साध्यते॥११॥ समासवचनमुद्देशः ।यथा- शल्यमिति ॥१२॥

उद्देशलक्षणमाह- समासेत्यादि। सङ्क्षेपेण भणनमुद्देश इत्यर्थः। उदाहरणमाह- यथा शल्यमिति। सर्वमेवाबाधजननंसङ्क्षेपेण शल्यमुच्यते, नतु शारीरागन्तुभेदेन प्रपञ्चनात्॥१२॥

विस्तरवचनं निर्देशः ।यथा- शारीरमागन्तुकं चेति ॥१३॥

निर्देशलक्षणमाह- विस्तरेत्यादि। विस्तरेण भाषणं निर्देश इत्यर्थः। उदाहरणमाह- यथा शारीरमागन्तुकं चेति। शारीरशल्यमागन्तुकं च शल्यमिति शल्यं द्विविधमुच्यते ॥१३॥

एवमित्युपदेशः । यथा- 'तथा न जागृयाद्रात्रौ दिवास्वप्नं च वर्जयेत्' इति ॥१४॥

उपदेशलक्षणमाह- एवमित्यादि। एवं कुर्यादित्युपदेश इत्यर्थः। उदाहरणमाह- यथेत्यादि। ननु, उपदेशनियोगयोः कोभेदः? उच्यते, प्रायिक उपदेशः, यथा- रात्रौ न जागृयादिति प्रायिकत्वेनोपन्यस्तं, कफाद्यभिभूते तु तत्ररात्रिजागरणस्यापि शस्तत्वात् दिवा न स्वापं कुर्यादित्यपि प्रायिकं, ग्रीष्मे तृष्णाद्यन्वये च दिवास्वापस्योचितत्वात्;नियोगश्चाप्रायिकः,

यथा- पथ्यमेव भोक्तव्यमिति; यद्यपि 'ज्वरितोऽहितमश्नीयाद्यद्यप्यस्यारुचिर्भवेत्'इत्यादिनाऽपथ्यभोजनस्याप्यवकाशः, तथाऽपि तदानीमपथ्यस्यैव पथ्यत्वमिति नियोगस्य व्यभिचारो नास्ति॥१४॥

अनेन कारणेनेत्यपदेशः, यथाऽपदिश्यते- मधुरः श्लेष्माणमभिवर्धयतीति ॥१५॥

अपदेशलक्षणमाह- अनेनेत्यादि। अनेन कारणेनेति कार्य प्रति हेतुकथनमपदेश इत्यर्थः। उदाहरणमाह- यथापदिश्यत इत्यादि। यथापदिश्यत इति उदाहरणोपक्रमे। द्रव्यविशेषो मधुरः कुतः श्लेष्माणं वर्धयति? अत्र मधुरः श्लेष्माणं वर्धयति अर्थान्निजभावेन मधुरत्वेन वर्धयति॥१५॥

प्रकृतस्यातिक्रान्तेन साधनं प्रदेशः । यथा- देवदत्तस्यानेन शल्यमुद्धृतं तथा यज्ञदत्तस्याप्ययमुद्धरिष्यतीति ॥१६॥

प्रदेशमाह- प्रकृतस्येत्यादि। उदाहरणमाह- यथा देवदत्तस्येत्यादि। अत्र यज्ञदत्तस्य शल्योद्धरणं प्रस्तुतं, तद्देवदत्तस्य शल्योद्धरणेनातिक्रान्तेन साध्यते॥१६॥

1. प्रकृतस्यानागतस्य साधनमतिदेशः ।

यथा- यतोऽस्य वायुरुर्ध्वमुत्तिष्ठते तेनोदावर्ती स्यादिति ॥१७॥

अतिदेशमाह- प्रकृतस्येत्यादि। अनागतस्य भविष्यतः। उदाहरणमाह- यथा यत इत्यादि। अत्र वायोरुर्ध्वमुत्थानं प्रकृतम्। तेन प्रस्तुतेन अनागतं भविष्यदुदावर्तित्वं साध्यते। उदावर्ती स्यात् उदावर्ती सम्भाव्येत॥१७।

अभिव्याप्यापकर्षणमपवर्गः। यथा- अस्वेद्या विषोपसृष्टाः, अन्यत्र कीटविषादिति ॥१८॥
अपवर्गमाह- अभिव्याप्येत्यादि। (गुणक्रियादिभिः सर्वतो वा अभिव्याप्त कस्यचित् पदार्थस्य तेभ्यो गुणक्रियादिभ्यः पृथक्करणम् अपवर्गः)।
उदाहरणमाह- यथा अस्वेद्या इत्यादि। उत्सर्गरूपतया विषोपसृष्टानस्वेद्यान् प्रतिपाद्यापवादमाह- अन्येत्रेत्यादि॥१८॥
येन पदेनानुक्तेन वाक्यं समाप्येत स वाक्यशेषः । यथा- शिरः पाणिपादपार्श्व पृष्ठोदरोरसामित्युक्ते पुरुषग्रहणं विनाऽपि गम्यते पुरुषस्येति ॥१९॥
वाक्यशेषमाह- येनेत्यादि। उदाहरणमाह- यथा शिर इत्यादि। गम्यते ज्ञायत इत्यर्थः॥१९॥
यदकीर्तितमर्थादापद्यते साऽर्थापत्तिः ।
यथा- ओदनं भोक्ष्ये इत्युक्तेऽर्थादापन्नं भवति- नायं पिपासुर्यवागूमिति ॥२०॥
अर्थापत्तिमाह- यदकीर्तितमित्यादि। अकीर्तितम् अप्रतिपादितम् तदुदाहरणमाह- यथौदनमित्यादि। नायं पातुमिच्छुर्यवागूमित्यर्थ॥२०॥
यद्यत्राभिहितं तस्य प्रातिलोम्यं विपर्ययः ।
यथा- कृशाल्पप्राणभीरवो दुश्चिकित्स्या इत्युक्ते विपरीतं गृह्यते दृढादयः सुचिकित्स्या इति ॥२१॥
विपर्ययमाह- यद्यत्राभिहितमित्यादि। प्रातिलोम्यं विपरीतम्। उदाहरणमाह- यथा कृशाल्पेत्यादि। विपर्ययेणविपरीतमेव गम्यते, अर्थापत्त्या अविपरीत एवार्थः प्रतीयत इत्यनयोर्भेदः॥२१॥
प्रकरणान्तरेण समापनं प्रसङ्गः, यद्वा प्रकरणान्तरितो योऽर्थोऽसकृदुक्तः समाप्यते स प्रसङ्गः ।
यथा- पञ्चमहाभूतशरीरिसमवायः पुरुषस्तस्मिन् क्रिया सोऽधिष्ठानमिति वेदोत्पत्तावभिधाय, भूतचिन्तायां पुनरुक्तं- यतोऽभिहितं पञ्चमहाभूतशरीरिसमवायः पुरूष इति, स खल्वेष कर्मपुरुषश्चिकित्साधिकृत इति ॥२२॥
प्रसङ्गमाह- प्रकरणान्तरेणेत्यादि। प्रकरणान्तरेणेति प्रकरणान्तरोक्तेनार्थेनेत्यर्थः। समानं तुल्यम्। उदाहरणमाह- यथेत्यादि। प्रकरणान्तरेषु असकृदुक्तः पुनः पुनरुक्तः। समाप्यते समाप्तिं नीयते। तदेव कथ्यते- यथेत्यादि। अपरे तु 'अधिकरणान्तरितो योऽर्थोऽसकृदुक्त' इति पठित्वा व्याख्यानयन्ति- स्नेहविरेकाधिकारयोर्नवज्वरी निषिद्धः, पुनर्ज्वराधिकारे तरुणज्वरिणः स्नेहशोधने निषिद्धे इति अधिकरणेऽन्तरितस्यर्थस्यासकृदुक्तिः॥२२॥

(सर्वत्र )यदवधारणेनोच्यते स एकान्तः ।
यथा- त्रिवृद्विरेचयति, मदनफलं वामयति(एव) ॥२३॥
एकान्तलक्षणमाह- सर्वत्रेत्यादि। अवधारणेन अविकल्पेन, नियमेनेत्यर्थः; उदाहरणेऽवधारणवाचिन एवकारस्य निर्देशात् उदाहरणमाह- यथा त्रिवृद्विरेचयतीयि॥२३॥
क्वचित्तथा क्वचिदन्यथेति यः सोऽनेकान्तः ।
यथा- केचिदाचार्या ब्रुवते द्रव्यं प्रधानं, केचिद्रसं, केचिद्वीर्यं केचिद्विपाकमिति ॥२४॥
अनेकान्तमाह- क्वचित्तथेत्यादि। उदाहरणमाह- यथा केचिदाचार्या ब्रुवते द्रव्यं प्रधानमित्यादि। स्पष्टार्थः॥२४॥

आक्षेपपूर्वकः प्रश्नः पूर्वपक्षः ।
यथा- कथं वातनिमित्ताश्चत्वारः प्रमेह असाध्या भवन्तीति ॥२५॥
पूर्वपक्षमाह- आक्षेपेत्यादि। उदाहरणमाह- यथेत्यादि। अत्रैव दोषजानां साध्यत्वेनोपलब्धेरिति हेतोः पूर्वपक्षावतारः।
निर्णयाङ्गत्वेनार्थसाधनत्वमेव संशयस्यापि॥२५॥
तस्योत्तरं निर्णयः ।
यथा- शरीरं प्रपीड्य पश्चादधो गत्वा वसामेदोमज्जानुविद्धं मूत्रं विसृजति वातः एवमसाध्या वातजा इति ॥२६॥
तथा चोक्तम्- कृत्स्नं शरीरं निष्पीड्य मेदोमज्जावसायुतः ।
अधः प्रकुप्यते वायुस्तेनासाध्यास्तु वातजाः ॥२७॥
निर्णयमाह- तस्योत्तरमित्यादि। तस्य पूर्वपक्षस्य यदुत्तरं स निर्णय इत्यर्थः। उदाहरणमाह- यथा शरीरमित्यादि। यतः शरीरपीडादिकं कृत्वा वसाद्यन्वितं मूत्रं वातो विसृजति, अतो मज्जक्षये पूर्वपूर्वधातुक्षयादसाध्यत्वमित्यर्थः॥२६-२७॥
परमतमप्रतिषिद्धमनुमतम् ।
यथा- अन्यो ब्रूयात्- सप्त रसा इति, तच्चाप्रतिषेधादनुमन्यते कथञ्चिदिति ॥२८॥
अनुमतमाह- परमतमित्यादि। अप्रतिषिद्धम् अधिगतमित्यर्थः। उदाहरणमाह- यथेत्यादि। कथञ्चिदिति केनापि प्रकारेणेत्यर्थ॥२८॥
प्रकरणानुपूर्व्याऽभिहितं विधानम् ।यथा- सक्थिमर्माण्येकादश प्रकरणानुपूर्व्याऽभिहितानि ॥२९॥
विधानमाह- प्रकरणेत्यादि। प्रकरणानुपूर्व्याऽभिहितमिति यथाक्रममुक्तम्। चन्द्रनन्दनेन च 'परिपाठ्याऽर्थकथनं विधानम्' इति विधानलक्षणं कृतम्। उदाहरणमाह- यथा सक्थीत्यादि। मर्मणां प्रकरणानुपूर्व्या अभिधानं क्षिप्ततलहृदयैत्यादिकम्॥२९॥

एवं वक्ष्यतीत्यनागतावेक्षणम् । यथा- श्लोकस्थाने ब्रूयात्- चिकित्सितेषु वक्ष्यामीति ॥३०॥
अनागतावेक्षणमाह- एवमित्यादि। अनागतस्य भविष्यतः अवलोकनं कार्यार्थमवेक्षणमित्यर्थः उदाहरणमाह- यथा श्लोकेत्यादि॥३०॥
यत्पूर्वमुक्तं तदतिक्रान्तावेक्षणम् । यथा- चिकित्सितेषु ब्रूयात्- श्लोकस्थाने यदीरितमिति ॥३१॥
अतिक्रान्तावेक्षणमाह- यदित्यादि। अतिक्रान्तस्य अतीतस्य अवेक्षनम्। उदाहरणमाह- यथा चिकित्सितेष्वित्यादि॥३१॥
उभयहेतुदर्शनं संशयः ।यथा - तलहृदयाभिघातः प्राणहरः, पाणिपादच्छेदनमप्राणहरमिति ॥३२॥
संशयमाह- उभयेत्यादि। उभयोर्विसदृशयोरर्थयोर्हेतुः तस्य दर्शनम्। उदाहरणमाह- यथा तलेत्यादि। ननु, एतत् संशयज्ञानार्थमुदाहृतं, संशयोऽस्ति कुतः? तलहृदयाभिघातस्य तथा पाण्यादिच्छेदस्य प्राणहरत्वाप्राणहरत्वाभ्यां पृथग्दर्शितत्वात्। सत्यं, परं यत्र घातच्छेदयोर्द्वयोः सद्भावस्तत्र किं तलहृदयाभिघातान्मरणमुत पाणिपादच्छेदाज्जीवनमित्येवं संशयः ॥३२॥
तन्त्रेऽतिशयोपवर्णनं व्याख्यानम् ।
यथा- इह पञ्चविंशतिकः पुरूषो व्याख्यायते, अन्येष्वायुर्वेदतन्त्रेषु भूतादिप्रभृत्यारभ्य चिन्ता ॥३३॥
व्याख्यानमाह- तन्त्रे इत्यादि। तन्त्रे शास्त्रे। अतिशयस्य अतिरिक्तस्यार्थस्य उपवर्णनं ख्यापनं व्याख्यानम्। 'तत्रातिशय' इति पाठे तत्रेति निर्धारणे। उदाहरणमाह- यथा इहेत्यादि। पञ्चविंशतिकः पुरुष इति पञ्चविंशतितम इत्यर्थः, अव्यक्तादीनामष्टानां प्रकृतिविकारैः षोडशभिः सह चतुर्विंशतित्वात्। पुरुष इति क्षेत्रज्ञः। स्वमतमभिधाय परमतमाह- अन्येष्वायुर्वेदतन्त्रेष्वित्यादि। भूतादिस्तामसोऽहङ्कारः ; एतेन भूतादिमहङ्कारमारभ्यान्यायुर्वेदतन्त्रेषु चिन्ता नत्वव्यक्तमारभ्येति॥३३॥

अन्यशास्त्रासामान्यास्वसञ्ज्ञा ।
यथा- मिथुनमिति मधुसर्पिषोर्ग्रगणं; लोकप्रसिद्धमुदाहरणं वा ॥३४॥

स्वसञ्ज्ञामाह- अन्यशास्त्रासामान्या स्वसञ्ज्ञेत्यादि। अन्यानि शास्त्राणि आयुर्वेदादपराणि व्याकरणादीनि तेषु, असामान्या असाधारणा, तत्राननुगता स्वशास्त्रेष्वेव प्रयोजनवतीत्यर्थः। उदाहरणमाह- यथा मिथुनमित्यादि। ननु, स्वसञ्ज्ञाप्रणयनं व्यवहारार्थं क्रियते, न चात्र मिथुनसञ्ज्ञया यन्मधुसर्पिषोर्ग्रहणं तद्वारेण व्यवहारो दृश्यते? उच्यते- उदाहरणमात्रमेतद्यथाकथञ्चिदिति। अत एव पक्षान्तरमाह- लोके प्रसिद्धमुदाहरणं वा। स्वसञ्ज्ञाया ग्राह्यामित्यर्थः- यथा चतुर्षु स्नेहेषु महास्नेहसञ्ज्ञा। अतः परं केचिदधीयते- यथोष्णभयात् छायामनुसरतीति। ते तूदाहरणमपि तन्त्रयुक्तिष्विच्छन्ति। तन्न युक्तं, उद्देशसूत्रे उदाहरणख्यतन्त्रयुक्तेरनुक्तेः, सङ्ख्याधिक्यप्रसक्तेश्च, तस्माद्यथोष्णेत्यादिकोऽपपाठ एवेति॥३४॥
निश्चितं वचनं निर्वचनम् ।
यथा- आयुर्विद्यतेऽस्मिन्ननेन वा आयुर्विन्दतीत्यायुर्वेदः ॥३५॥
निर्वचनमाह- निश्चितमित्यादि। उदाहरणमाह- यथा आयुर्विद्यतेऽस्मिन् इत्यादि॥३५॥
दृष्टान्तव्यक्तिर्निदर्शनम् । यथा- अग्निर्वायुना सहितः कक्षे वृद्धिं गच्छति तथा वातपित्तकफदुष्टो व्रण इति ॥३६॥
निदर्शनमाह- दृष्टान्तव्यक्तिरित्यादि। दृष्टान्तेन व्यक्तिर्यस्मिन् वाक्ये तत्तथा। एतेनैतदुक्तं भवति- दृष्टान्तेनार्थःप्रसाध्यते यत्र तन्निदर्शनमिति। अत एव च निदर्शनात् हेत्वर्थो भिद्यते, हेत्वर्थस्य दृष्टान्तमात्रत्वात् ।उदाहरणमाह- यथा अग्निरित्यादि। तथेति अभिवृद्धिं गच्छतीत्यर्थः॥३६॥

इदमेव कर्तव्यमिति नियोगः। यथा- पथ्यमेव भोक्तव्यमिति ॥३७॥ नियोगमाह- इदमित्यादि। उदाहरणमाह- यथा पथ्यमित्यादि। (क्वचिन्नियोगो व्यभिचरति, यथा- ज्वरितस्यारुचौ सत्यामपथ्यमपि दीयते; तदुक्तं- 'ज्वरितोऽहितमश्नीयाद्यद्यस्य ह्यरुचिर्भवेत्। अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथवा' इति। तन्त्रान्तरेऽप्युक्तं- 'उत्पद्यते हि साऽवस्था देशकालबलं प्रति। यस्यां कार्यमकार्यं स्यादवर्जितं कार्यमेव च'- इति )॥३७॥
इदं चेदं चेति समुच्चयः ।
यथा- मांसवर्गे एणहरिणादयो लावतित्तिरिशारङ्गश्च प्रधानानीति ॥३८॥
समुच्चयमाह- इदमित्यादि। उदाहरणमाह- यथा मांसेत्यादि। एणादयः प्रधानानि लावादयश्च प्रधानानीति समुच्चयश्च॥३८।
इदं वेदं वेति विकल्पः ।
यथा- रसौदनः सघृता यवागूर्वा (भवत्विति) ॥३९॥
विकल्पमाह- इदं वेत्यादि। प्रत्येकं वाशब्दोपादानमत्रोदाहरणे यन्न कृतं तदेकेनापि वाशब्देन बहुषु विकल्पतादर्शनार्थं; क्वचिद् वाशब्दं विनाऽपि विकल्पो भवति, यथैकं रोगं प्रति बहुषु योगेषु वाशब्दं विनाऽप्यन्यतमो योगो योज्य इति विकल्पः। उदाहरणमाह- यथा रसौदन इत्यादि॥३९॥

यदनिर्दिष्टं बुद्धयाऽवगम्यते तदूह्यम् । यथा- अभिहितमन्नपानविधौ चतुर्विधं चान्नमुपदिश्यते- भक्ष्यं भोज्यं लेह्यं पेयमिति, एवं चतुर्विधे वक्तव्ये द्विविधमभिहितम्; इदमत्रोह्यम्- अन्नपाने विशिष्टयोर्द्वयोर्ग्रहणे कृते चतुर्णामपि ग्रहणं भवतीति; चतुर्विधश्चाहारः प्रविरलः, प्रायेण द्विविध एव; अतो द्वित्वं प्रसिद्धमिति ।

किञ्चान्यत्- अन्नेन भक्ष्यमवरुद्धं, घनसाधर्म्यात्; पेयेन लेह्यं, द्रवसाधर्म्यात् ॥४०॥

साम्प्रतमूह्याख्यां तन्त्रयुक्तिमाह- यदित्यादि। अनिर्दिष्टमिति साक्षादित्यर्थः।

उदाहरणमाह- यथाऽमिहितमित्यादि। कथमत्रोह्यं भवतीति कथनायाह- भक्ष्यं भोज्यं लेह्यं पेयमिति चतुर्धा वक्तव्येद्विविधममिहितमत्रोह्यं भवति चातुर्विध्यमत्रोह्यं भवतीत्यर्थः। बुद्धिगम्यमूह्यं प्राक् प्रतिपादितं तत् कीदृश्या बुद्ध्यागम्यत इत्याह- अन्नपाने इत्यादि। अन्नपानयोर्विशिष्टयोरभ्यवहार्ययोर्ग्रहणे चतुर्णामभ्यवहार्यविशेषाणांभक्ष्यभोज्यलेह्यपेयानां ग्रहणं भवतीति। चातुर्विध्यमेव किमिति नोक्तमित्याशङ्कयाह- चतुर्विध इत्यादि। प्रविरल इतिप्रकर्षेण विरलः क्वचित्कथञ्चिद्भावात्। प्रकारान्तरेणापि चतुर्विधत्वमाह- किञ्चान्यदित्यादि। अन्न केचित्पूर्वपक्षंकुर्वन्ति वाक्यार्थस्यास्पष्टाविद्यमानस्य योजनादूह्यं न तन्त्रयुक्तिरिति, लीनस्यानिर्दिष्टस्य चार्थस्यवाक्यादेवोहनेनोभयरूपस्य योजनादूह्यं तन्त्रयुक्तेरेव॥४०॥

भवन्ति चात्र-

सामान्यदर्शनेनासां व्यवस्था सम्प्रदर्शिता ।<br>
विशेषस्तु यथायोगमुपधार्यो विपश्चिता ॥४१॥<br>
द्वात्रिंशद्युक्तयो ह्येतास्तन्त्रसारगवेषणे ।<br>
मया सम्यग्विनिहिताः शब्दार्थन्यायसंयुताः ॥४२॥<br>
यो ह्योता विधिवद्वेत्ति दीपीभूतास्तु बुद्धिमान् ।<br>
स पूजार्हो भिषक्श्रेष्ठ इति धन्वन्तरेर्मतम् ॥४३॥

एवं तन्त्रयुक्तीरभिधायोपसंहरन् प्रतिपादिततन्त्रयुक्तिविशेषप्रतिपत्तये श्लोकमाह- भवन्ति चात्रेत्यादि। तन्त्रयुक्तीनांविशेषो यथासम्बन्धं विदुषा उपधारणीय इत्यर्थः। कार्तिकस्तु द्वात्रिंशद्युक्तय इत्यादिकं श्लोकद्वयं पठति॥४१-४३॥

इति सुश्रुतसंहितायामुत्तरतन्त्रे तन्त्रभूषणाध्यायेषु तन्त्रयुक्तिर्नाम<br>
(तृतीयोऽध्यायः, आदितः) पञ्चषष्टिमोऽध्यायः ॥६५॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसङ्ग्रहाख्यायां<br>
सुश्रुतव्याख्यायामुत्तरतन्त्रे पञ्चषष्टितमोऽध्यायः॥६५॥

इन्दु तन्त्रयुक्तिः

तत्राधिकरणं योगो हेत्वर्थोर्थः पदस्य च।
प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम्॥
उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः।
प्रङ्गैकान्तनैकान्ताः सापवर्गो विपर्ययः॥
पूर्वपक्षविधानानुमतव्याख्यानसंशायाः।
अतीतानागतापेक्षा स्वसंज्ञोह्यसमुच्चयाः॥
निदर्शनं निर्वचनं नियोगोऽथ विकल्पनम्।
प्रत्युत्सारस्तथोद्धारः सम्भवस्तन्त्रयुक्तयः॥ अ सं उ ५०

तत्रेत्यादिना युक्तयः उच्यन्ते। वाक्यार्थानां योजनं युक्तिः याभिर्योजनाभिर्विना तन्त्रमसंबद्धं भवति। का युक्तयः। तत्र तेष्वधिकरणं नाम अधिकरणं प्रस्तावः नामान्येनोक्तमप्यर्थजातं यद्बलाद्विशेऽवस्थाप्यते तदधिकरणम्। यथा सप्ताहादौधं केचिदाहुरन्ये दशाहत इति वाक्यार्थः सामान्येन प्रवृत्तोऽधिकरणवशाज्ज्वराख्ये विशेषेऽवस्थाप्यते॥१॥

योगो नाम योगः सम्बन्धः स च पदार्थयोर्वाक्यार्थयोर्वा। तत्र पदार्थयोः साध्यसाधकभावेन। यथा - रागादिरोगाः इत्यादौ समूला इत्यस्यापास्ता इत्यनेन वाक्यार्थयोर्यथा जीर्णाजीर्णविशङ्कायां पुनरुष्णोदकं पिबेदित्यस्य तेनोद्गारविशुद्धिः स्यात्ततश्च लघुता रुचिरित्यनेन॥२॥

हेत्वर्थो नाम यदेकत्रोच्यमानमन्यत्रापि तथैवोपयुज्यते। यथा तत्रैकैकत्र शाखायामित्यस्यद्यवेद्योक्त्या शेषा वेद्या इति गम्यते॥३॥

पदार्थो नाम पदेनार्थोऽवगम्यते। यथा गुर्वादयो गुणशब्दादवगम्यन्ते॥४॥

प्रदेशो नाम यत्रैकदेशस्योच्यमानस्यार्थस्य प्रसादादनुच्यमानोपि तच्छेषापद्यते स प्रदेशः। यथा कुकूलादिपाकक्रमेण लाघवातिशयोऽपूपानामुच्यमानानां प्रसादादनुच्यमानान्यपि कृतान्नानि तथावगम्यन्ते॥५॥

निदेशोनाम यच्छब्दमात्रेण निर्दिष्टानां स्वरूपविशेषप्रदर्शनाय पुनः कीर्त्तनं निर्देशः। यथा वस्तिव्यापदि द्रुतोत्क्षिप्त इत्यादिकमुद्दिश्य तेषु दोषं प्रदर्शयितुमनुच्छवास्य तु बद्ध इत्युच्यते॥७॥

वाक्यशेषोनाम यस्मिन् वाक्ये एकदेशः शिष्यते व्याख्यानकालेत्वनुच्यमानोप्यापतति स वाक्यशेषः। यथा रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता इत्यत्र उच्यत इति वाक्यशेषः। यथा रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता इत्यत्र उच्यत इति वाक्यशेषः॥८॥

प्रयोजनं नाम यत् सम्पादयितुं क्रिया ह्यारभ्यते तत्प्रयोजनम्। यथा सदोषेषु दोषशेषपाचनमग्निसन्धुक्षणं च सम्पादयितुमौषधपानमरभ्यते॥ ९॥

उपदेशो नाम शुद्धस्याप्तवचनस्य कीर्त्तनमुपदेशः। यथा गर्भस्तु मातुः पृष्ठाभिमुखो ललाटे कृताञ्जलिः संकुचिताङ्ग इत्येवमादि॥१०॥

अपदेशो नाम शुद्धस्याप्तवचनस्य प्रतिज्ञातस्य साधनहेतुरपदेशः। यथा अहितायोत्तरोत्तरं दुष्टा वातादय इत्यस्यां प्रतिज्ञायां दुष्परिहरत्वादिति हेतुः॥११॥

अतिदेशो नाम अन्यसम्बन्धिनां धर्माणामन्यत्रावस्थापमतिदेशः। यथा पालक्यासम्बन्धिनां धर्माणां चुच्चावस्थापनम्॥१२॥

अर्थापत्तिर्नाम यदेकस्मिन्नर्थ उच्यमाने अनुक्तस्याप्यर्थस्य बलादागमनं सार्थापत्तिः। यथा पक्वे जले जीर्णेप्यामं न पेयमित्युच्यमाने अभोजनादित्यनुच्यमानस्यापि सामर्थ्यादागमनम्॥१३॥

निर्णयो नाम उद्दिष्टानामर्थानामनुद्दिष्टेन निराकाङ्क्षत्वापदनं निर्णयः। यथा वर्त्मरोगविज्ञानीयोक्तानां रोगाणां वर्त्मरोगप्रतिषेधनिराकाङ्क्षत्वापादनम्॥१४॥

प्रसङ्गो नाम यदप्राकरणिकस्यापि वस्तुनः किञ्चित् सम्बन्धेन यत् कीर्तनं स हि प्रसङ्गः। यथा वमनप्रस्तावे धूमान्तैः प्रायः सर्वैरित्यादेरप्रकारणिकस्य कीर्त्तनम्॥१५॥

एकान्तो नाम यत् पक्षान्तरव्यावर्त्तकं तदेकान्तः। यथा दोषहेतुजत्वोक्तेर्निजत्वं न कदाचिदपि बाह्यहेतुजं तदेकान्तः। यथा दोषहेतुजत्वोक्तेर्निजत्वं न कदाचिदपि बाह्यहेतुजं व्याप्नोति॥१६॥

नैकान्तो नाम यदुच्यमानमप्यवश्यम्भावित्वेननियतं स नैकान्तः। यथा ज्वरस्तु जातः षड्रात्रादशिवनीषु निवर्तत इत्येतदुक्तमप्यवश्यम्भावित्वेनानियतम्॥१७॥

अपवर्गो नाम सामान्योक्त्यनुप्रविष्टस्य विशेषेणाकर्षणं सोपवर्गः। यथा मधुरं श्लेष्मळमित्युक्तावनुप्रविष्टेषु जीर्णशाल्यादिषु शब्देनाकर्षणम्॥ १८॥

विपर्ययो नाम उक्तस्यान्यथाभावो विपर्ययः। यथा निदानोक्तानामनुपशयो भवति तद्विपरीतानां चोपशयः॥१९॥

पूर्वपक्षो नाम परपतिज्ञातानुपपत्तिप्रदर्शनपरो वाक्यसमुदायः पूर्वपक्षः यथा षड्रसवादिनं प्रत्यनेकरसप्रतिपादकानि वाक्यानि॥२०॥

विधानं नाम तन्त्रस्य कर्ता विशिष्टा या पदादिरचना कृता तद्विधानम्। यथा सर्वविरोधपरिज्ञानद्व्यवहारोच्छित्तिर्माभूदित्यभिप्रायेणोक्तं न च तद्विज्ञानमेकान्तभद्रकमिति॥ २१॥

अनुमतं नाम परपक्षस्य भिन्नस्याप्याङ्गीकरणमनुमतम्। यथा वस्तिविधाने कल्पनाया मतेषु दोषौषधादिबलतः सर्वमेतत् प्रमाणयेदित्यङ्गीकरणम्॥२२॥
व्याख्यानं नाम सङ्क्षेपेणोक्तस्यार्थस्य विस्तारेणाख्यानं व्याख्यानम्। अथवा स्फुटैः शब्दैरनभिहितं गुरुपरम्पर्यक्रमागतम्॥२३॥
संशयो नाम विरुद्धानां पक्षाणामनिश्चयः संशयः। यथा विषवेगसंभवपक्षेषु॥२४॥
अतीतापेक्षा नाम यत्रातीतं पदमापेक्ष्य सम्बन्धार्थता भवति सातितापेक्षा। यथा च स्वेद्यादयः स्नेह्याः इत्युक्ते नत्वतिमन्दाग्निरित्यादेः स्नेह्याः इत्यपेक्षते। यथा च ज्वरे लङ्घनं कुर्वीतेति सूत्रोक्तं लङ्घनमपेक्षते॥२५॥
अनागतापेक्षा नाम यत्रातीतं पदमपेक्ष्य सम्बन्धार्थता भवति सानागतापेक्षा। यथा ततो नावनगण्डूषेत्यादिना दिनचर्यायां नस्यादिविधयोऽपेक्ष्यन्ते॥२६॥
स्वसंज्ञा नाम स्वतन्त्रे एवमन्यस्मिञ्छास्त्रे न श्रूयते सा स्वसंज्ञा। यथा आपानोजेन्ताक इत्येवमादि॥२७॥
ऊह्यं नाम यत् भिष्रिजा स्वप्रज्ञया शब्देनानुक्तमपि व्यवस्थाप्यते तदूह्यम्। यथा द्रव्यं जह्यादयौगिकमिति यन्न यौगिकं तच्छब्देन नोक्तमपि प्रज्ञया व्यपस्थाप्यते॥२८॥
समुच्चयो नाम एकस्मिन् विहिते तदविरोधेन तत्रैव द्वितीयस्य विधानं समुच्चयः। यथा वातस्योपक्रमः स्नेहः स्वेदः इत्यादि॥२९॥
निदर्शनं नाम साध्यैकदेशो दृष्टान्तो निदर्शनम्। यथा आमदोषेषु त्रिविधेषु लङ्घनपाचनशोधनानि दृष्टान्तः। एवमन्यानपि व्याधीन् स्वनिदानविपर्ययात् चिकित्सेदित्यादेः॥३०॥
निर्वचनं नाम संज्ञयोक्तस्य तदर्थेन योजनं निर्वचनं। यथा सूचीभिरिव गात्राणि भिद्यतीति विषूचिका॥३१॥
नियोगो नाम क्रियाणां व्यापाराणां नियोगः। यथा भवता स्वेदमूर्च्छापरीतेनापि नैषा पिण्डिका विमोक्तव्येति॥३२॥
विक्ल्पो नाम क्रमेण यौगपद्येन वा सम्भविनां पक्षाणां कीर्त्तनम्। यथा कुर्वीत लङ्घनं प्रग्रूपेषु ज्वरादौ वा॥३३॥
प्रत्युत्सारो नाम यत्रोपपत्तिं दर्शयन्तः परस्परमतानि निवारयन्ति। यथा गर्भिणी अष्टमे मासि क्षीरयवागू सर्पिष्मतीं पिबेत् नेति खण्डकाप्यः गर्भस्य पैङ्गळ्या बाधभयात्। अस्तु पैङ्ग्ळया बाधास्तथाप्येवं कुर्वती निरुजं बलवर्णाद्युपेतमपत्यं जनयतीति भगवानत्रेयः॥३४॥
उद्धारो नाम यच्छास्त्रे चोद्यस्य समाधानम्। यथा चित्रकर्मगुणकृत् गुरुणोक्तो वस्तिरित्यादि यावत् सर्वतः कथमपोहति दोषानिति चोद्यस्य स्तिमितमारुतवश्यमेतदित्यादि समाधानम्॥३५॥
सम्भवो नाम किमप्यन्यत्रादर्शनाद्येन नियमेन स्थाप्यते स सम्भवः। यथा सर्वरोगेषु हेतुलिङ्गौषधादीनां सामान्योक्तौ वातादिविशेषणास्थापनं सम्भवप्रसादाल्लभ्यम्॥३६॥ एवं तन्त्रयुक्तयः॥
यद्यपि भट्टारकप्रस्थानेन च परिप्रश्नव्याकरणव्युत्क्रान्ताभिधानहेत्वाख्याश्चतस्रोवशिष्यन्ते तथापि आचार्येण तन्त्रेणानिबद्धा इत्यत्र नोच्यन्ते। अथवा तन्त्रयुक्तित्वमेव तासां नाङ्गीक्रियते। तत्र चाग्न्यतियोगोक्तौ वातादिविशेषणावस्थापनं सम्भवप्रसादाल्लभ्यमेवाद्युक्तम्॥
सरसः सुप्तपद्मस्य रविदीधितयो यथा।
यथा गृहस्य दीपाभास्तथा तन्त्रस्ययुक्तयः॥
अधीयानोपि तन्त्राणि तन्त्रयुक्त्यविचक्षणः।
नाधिगच्छति तन्त्रार्थमर्थं भाग्यक्षये यथा॥
सरस इत्यादि सुबोधम्। तन्त्रयुक्त्यविचक्षणः एतासु षट्त्रिंशत्तन्त्रयुक्तिष्वसमर्थस्तन्त्रार्थं नाधिगच्छति न प्राप्नोति यथा भाग्यक्षये धनम्॥
वाक्यार्थयोजनादेता युक्तयस्त्विष्टसिद्धिदाः।
असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधकाः॥
लीनव्यत्यासलेशोक्तिगदितानां प्रकाशकाः।
वाक्यन्यायोदधेः सारं गृहीत्वैवं व्यवस्थिताः॥
एता युक्तयो वाक्यार्थस्य योजनाद्धेतोः स्वेष्टसिद्धिं ददति। यानि चासद्वादिनामर्थसम्बन्धप्रदर्शनपरणि वाक्यानि तेषां प्रतिषेधकाः। लीनगदितानां व्यत्यासगदितानां च प्रकाशकाः। लीनं तद्यत् स्फुटं वक्तुं न पार्यते। व्यत्यासः परस्परविवर्तनम्। लेशोंशेन स्पर्शः। उक्तिर्वचनभङ्गिः। एताश्च युक्तयो वाक्यन्यायोदधेरसंख्यप्रकारसम्भविनो गेयस्येव जातयः सारं गृहित्वा एवं व्यवस्थिताः। पदार्थयोजनास्तु व्युत्पन्नानां प्रसिद्धा एवेत्यत आचार्येण नोक्ताः।

युक्ति शब्दः खलूपायवाची। नह्येता युक्तीः प्रत्याख्याय शक्यते तन्त्रं प्रणेतुम्। तत्र काश्चिद् युक्तयः वाक्यप्रयोजना उद्देशनिर्देशादयः। काश्चिदर्थप्रयोजना अधिकरणपदार्थादयः। तत्राधिकरणं नाम यदधिकृत्य प्रवर्तते शास्त्रं स्थानमध्ययः प्रकरणं वाक्यं वा। तत्र शास्त्राधिकरणं यदधिकृत्य शास्त्रं प्रवर्तते। यथा अष्टावङ्गान्यधिकृत्य हृदयाख्यं सर्वशास्त्रं प्रवृत्तम्। यथोक्तं कायबालेत्यादि। स्थानाधिकरणं यथा- अत्रार्थाः सूत्रिताः सूक्ष्माः प्रतन्यन्ते हीत्यादि। एवमध्यायादिष्वपि वेद्यम्।

योगो नाम योजना उद्देशनिर्देशयोस्तत्र न्त्र भाष्ययोर्वा। अथातोऽङ्गविभागं शारीरमित्युद्दिश्याङ्गानि विभजते शिरोऽन्तराधिरित्यादिना। युक्तिर्वा योगः प्रतिज्ञा हेतुर्दृष्टान्तोपनयो निगमनमिति पञ्चविधम् धः। यथाग्निः शरीरमूलम्। तं वि तद्विपक्वे आहारे सति तत्स्थितेरिति हेतुः। आहारान्न ह्यपक्वद्रसादय इति वचनात्। यथा शाल्यङ्कुरस्य बीजमिति दृष्टान्तः। उपनयो यथा चिकित्साशास्त्रस्य सप्रयोजनत्वसाधनाय बहुधा दृष्टान्तोपनयनं कृतवान् तन्त्रकृत् कस्यासिद्धोऽग्नितोयादिरित्यादयः। तस्मात् सप्रयोजनमेव चिकित्साशास्त्रं प्रत्यक्षफलत्वादित्युपनयः। तस्मदारम्भणीयमिति प्रमाणफलोपदर्शनमुखेन निगमनम्।यथोक्तं चतुष्पाद्गुणसम्पन्नेत्यादि चिकित्सायां संशयानुपपत्त्या प्रतिपादितया प्रमाणफलोपसंहारकरणम्।
हेत्वर्थो नामान्यप्रस्तावोक्तमन्यत्रपि तथैवोपपद्यते। ततैकैकत्र शाखायामित्यादि। तथा अवेध्याः संङ्कीर्णा ग्रथिता इत्यादि। तदेतेभ्यो विशेषवचनेभ्योऽनुमीयते शेषा वेध्या इति। अन्यथैतानि वचांसि निरर्थकानि स्युरिति।
पदार्थो नाम पदेनार्थो गम्यते। यथा द्रव्यमिति पदं तस्य भूजलादिः। गुणमिति पदं तस्यार्थो गुरुवादिः।
प्रदेशो नाम येषामर्थानामतिबहुत्वात् साकल्येनाभिधातुमशक्यत्वात् स्तोकमात्रमुच्यते यथोक्तम् इति द्रव्यैकदेश इत्यादि।
उद्देशो नाम संक्षेपाभिधानं यथा वायुः पित्तमित्यादि दोषसंक्षेपः।
निर्देशो नाम तस्यैव विस्तरोक्तिः यथोक्तं तत्र रूक्षो लघुरित्यादि।
वाक्यशेषो नाम यस्मिन् सूत्रे लाघविकेनार्थाद् गम्यमानमनुक्तं पूरणार्थमध्याह्रियते यथा तत्र खात्खानि देहेऽस्मिन् सम्भवन्तीति वाक्यशेषः। आप्या जिह्वा रसक्लेदा इत्युत्तरत्र भवार्थे तद्धितग्रहणात्।
प्रयोजनं नाम यदर्थं शास्त्रादि प्रवर्तते। यथा आतङ्कपङ्कमग्नानां हस्तालम्बो भिषग्जितमिति।
उपदेशो नामाप्तवचनम्। यथा स्नेहक्लोन्नाः कोष्ठागा इत्यादि।
अपदेशो नामाचार्यः कञ्चिदर्थं प्रतिज्ञाय हेतुमुपदिशति। यथा जीवितं म्रियमाणानां सर्वेषामेव नौषधादिति प्रतिज्ञा। हेतुमाह- नह्युपायमपेक्षन्ते सर्वे रोगा इति।
अतिदेशो नामातीतेन देशः अतिदेशः यत् किञ्चिदेवार्थमुक्त्वानुक्तार्थसाधनाय एवमन्यदपि प्रत्येतव्यमिति परिभाषायां ज्ञापयति। यथा महतः पञ्चमूलस्य काष्ठात् क्षौमेण वेष्टितम्। योज्यश्चैवं भद्रकाष्ठादि त्यादि।
अर्थापत्तिर्नाम येनार्थेनोक्तेन ततोऽन्योऽप्यर्थो गदित इव ज्ञायते। यथा - नैवाद्यानिशि नैवोष्णमित्युक्तम्। न तूक्तं दिवा भुञ्जीतेति। एतच्चार्थापत्त्या गम्यते।
निर्णयो नाम यदनिर्धारितस्यार्थस्य प्रतिष्ठापनम्। यथा दृश्यन्ते भगवन् केचिदित्यादिन चिकित्साशास्त्रं प्रति संशयकरणे पश्चान्निर्णयार्थमुत्तरं यथा न चिकित्सा च तुल्या भवितुमर्हतीत्यादि।
प्रसङ्गो नाम पूर्वाभिहितस्य सतोऽर्थस्य सतोऽर्थस्य केनचित् सम्बन्धान्तरेण पुनरभिधानम्। यथा सिराव्यधविधौ - लोहितं प्रभवं वदेत् शुद्धं तनोस्तेनैव स्थितिरित्युक्त्वा पुनः शारीरं शुद्धार्तवप्रसङ्गेनोक्तम्। न च पुनरुक्तिदोषः यस्मात् सिराव्यधे शरीरप्रभवत्वमेव रक्तस्योक्तं नतु क्रमो वर्णितः। शारीरे तु ययापूर्व्या शरीरहेतुः स्यात् तद् विस्तरणोक्तमिति।
एकान्तो नाम एकमेव पक्षमव्यभिचारेणाश्रयति नान्यत् न्यम्। तद्यथा ये भूते त्यादिना भूतादिजास्त्वागन्तव इति।
नैकान्तो नामान्यतरपक्षानवधारणम्। यथा जीवितं म्रियमाणानां सर्वेषामेव नौषधादित्यादि।
अपवर्गो नाम साकल्येनोपसृष्टस्य यत् पुनस्तदेकदेशापकर्षणम्। यथा शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्तश्चेत्यारभ्य तेषु स्रावयितुं रक्तमुद्रिक्तं व्यथ ध येत् सिरामितित्युत्सर्गमभिधायैकदेशापवादं वक्ति नतूनषोडशेत्यादिना।
विपर्ययो नाम यथोपदिष्टविपर्ययेण लक्षणादिकरणम्। यथा वातानुलोम्यमित्यादि सम्यक् स्निग्धे लक्षणमुक्त्वा रूक्षे विपर्यय इति।
पूर्वपक्षो नाम प्रतिज्ञातार्थसन्दूषकं वाक्यम्। यथा हिताहितं प्रत्याचिख्यासन्नाह यथा दृश्यन्ते भगवन् केचिदित्याभ्य हिताहित विभागस्य फलं तस्मादनिश्चतमित्यादि।
विधानं नाम यत् प्रकरणानुपूर्वं विधानमाचक्षते।
अनुमतं नाम यथा उष्णं शीतं द्विविधैवान्ये वीर्यमाचक्षतेऽपि च। नानात्मकमपीत्यादिना ह्यनुमतं न तु विघातकृत्।
व्याख्यानं नाम यमादृशेभ्यो विशिष्टतरबुद्धिगम्यम्। यथा सप्ताहात् कललं भवेदित्यादि। नह्यस्य गर्भस्य भावाः शक्या विज्ञातुं योगदृष्टिं मुक्त्वा।
संशयो नाम साकाङ्क्षितमनिश्चितवस्तुविज्ञानम्। यथा संशयप्राप्तमात्रे यो जीवितं तस्य मन्यत इत्यादि।
अतीतावेक्षणं नाम यदतिक्रान्तमवेक्ष्य प्रकृतस्य साधनमुच्यते। यथा रास्नाजीवकेत्यादौ महास्नेहं विपाचयेदिति। अत्र च न ज्ञायते कतमो

महास्नेहविद्युक्तमवेक्ष्य व्याख्याते।
अनागातावेक्षणं नाम यत्रानागतं विधिमवेक्ष्य पूर्वोर्थः साध्यते। यथा मद्यैः कल्पोदितानि वा वमनानि प्रयुञ्जीतेति।
स्वसंज्ञा नाम तन्त्रकारैः स्वतन्त्रव्यवहारार्थं प्रणीता परतन्त्रेषु न व्यवहरति ह्रियते। यथा शाखा रक्तादयस्त्वक् चेति।
ऊह्यं नाम यदनुपनिबद्धं ग्रन्थेऽस्मिन् यथा वर्गास्तेषु त्वलाभतः। युञ्ज्यात् तद्विधमित्यादि।
समुच्चयो नाम यथा पेयां विलेपीमकृतं कृतं चापि समुच्चिनोति।
निदर्शनं नाम यन्निदर्शयितव्यं सूक्ष्मप्यर्थं स्वर्धमसादृश्यात् स्पष्टीकरोत्यादर्श इव मुखम्। यथा कुसुम्भादि युता त तोयादि त्यादि।
निर्वचनं नाम निरुक्तम्। यथा जगद्विषाद्विषमित्यादि।
नियोगो नाम विविधं कल्पनं इदं वा कार्यमिदं वेति। यथा प्राग्रूपेषु ज्वरादौ वा लघ्वशनमपतर्पणं वेति।
प्रत्युत्सारो नाम यत्रोपपत्तिं दर्शयन्तः परस्परमतानि विवरयन्ति। तद्यथा - अस्थ्नां शतानि षष्ट्या चेत्यादि ग्रन्थे पूर्वमतात् षष्टिं प्रत्युत्सारयति सन्धिसहस्रद्वयं साधयन्।
उद्धारो नाम शास्त्रारम्भप्रत्याख्यानादिचोद्यस्य समाधानम्। यथा दृश्यन्ते भगवन् केचिदित्यारभ्य हिताहितविभागस्य फलं तस्मादनिश्चितमिति कृते चोद्ये न चिकित्साचिकित्सा च तुल्या भवितुमर्हतीति परिहारः।
सम्भवो नाम उत्पत्तिःयद्यस्मिन्नुत्पद्यतेऽनुपदिष्टम्। यथा दुष्टरक्तापगमनात् सद्यो रागरुजां शमः इत्युक्तम्। तदान्यत्रापि सम्भवत्येव श्रृङ्गजडायुकाप्रभृतिष्वपीति।